*Publisher*
Registrar
Rashtriya Sanskrit Sansthan
Deemed University
56-57, Institutional Area,
Janakpuri, New Delhi - 110 058

e-mail : rsksrp@yahoo.com
website : www.sanskrit.nic.in



ISSN : 0975

Edition - 2011

Annual Subscription : Rs. 100-00

Rs. 50.00 Per issue

Printed at :
Amar Printing Press, Delhi - 9
Ph., 9871699565, 8802451208
e-mail-amarprintingpress@gmail.com

**परामर्शदातृ-समितिः**



---

## सम्पादक-मण्डलम्

# विषयानुक्रमणिका

विमर्शः—



रिक्थः



समीक्षा

# प्राचीनन्याये हेत्वाभासचर्चा

किशोरनाथः झा

अनैकान्तिकः सव्यभिचारः, कथकस्य स्वीकृतं सिद्धान्तं साध्यतया निर्दिश्यमानं यो हेतुर्विरुणद्धि स भवति विरुद्धाभिधः, यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः, यो हेतुः साध्यधर्मेणाविशिष्टस्तुल्योऽसौ साध्यसमः–साध्यसदृशोऽर्थात् असिद्धो हेत्वाभासः, कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीतः इति पञ्च हेत्वाभासाः प्राचीनन्यायनुसारेण निरूप्य इतरशास्त्रदृष्ट्याऽपि हेत्वाभासाः विचार्यन्तेऽत्र प्रबन्धे।

भारतीयविद्यासु न्यायमीमांसयोर्महत्त्वमनितरसाधारणं विद्यते। शास्त्रान्तराणामिवैतयोरपि यद्यपि हितशासनत्वं पुमर्थसाधकत्वं च विद्येते तथापि पदार्थानां तत्त्वावबोधाय वैदिकवाक्यानामभिप्रायस्य परिज्ञानाय च यथाक्रमं न्यायमीमांसयोर्निर्दिष्टा प्रक्रिया धीधनानुपकरोति। अस्याः व्यवहारेण लोकाः शास्त्रान्तराभिप्रायपरिज्ञानेऽपि सौकर्यमनुभवन्ति। पदार्थानां तत्त्वावबोधः वैदिकवाक्यानामभिप्रायपरिज्ञानं तु भवत्येव एताभ्यां शास्त्राभ्याम्।

न्यायभाष्यस्य खद्योतव्याख्यायाः भूमिकायां विद्यासागरः गङ्गानाथ झा महाशयोऽभिलपति – 'तत्त्वतो याज्ञवल्क्योक्त्यनुसारेण द्विधैव विभागः दर्शनशास्त्रस्य युक्तिसङ्गतः प्रतिभाति' मीमांसान्यायश्चे'ति। तत्र मीमांसा वाक्यार्थविचारात्मिका न्यायश्च तदुपोद्बलकयुक्तिपरिशीलनात्मक इति विवेकः। अत्रैव च सर्वेषां दर्शनशास्त्राणामनुप्रवेशः। तत्त्वबुभुत्साप्रेरितमेव दर्शनशास्त्रम्। अत्र च बहवः प्रतिपाद्याः विषया अतीन्द्रिया इत्यतः सर्वत्र स्वयंसिद्धप्रामाण्यानां वाक्यानामुपयोगं विना ज्ञानं दुःशकमतोऽतीव प्रयोजिका वाक्यार्थविचारात्मिका मीमांसा। प्रामाणिकोऽपि विषयः केवलशब्दप्रमाणसिद्धस्तादृशीं विश्वासभूमिं नाधिरोहति यादृश्या कल्याणसिद्धिः स्यात्। अत एव भवति प्रयोजनं युक्त्यात्मकस्य न्यायस्य। प्रसिद्धानामस्माकं दर्शनानामप्यनयोरेव समावेश इति'। तस्मादुभयोर्न्यायमीमांसाशास्त्रयोर्महत्त्वमनितरसाधारणं सिद्ध्यति।

यद्यपि नैयायिकोऽनियतपदार्थवादी भवतीति प्रसिद्धं तथापि पदार्थतत्त्वाव-बोधप्रक्रियोपयोगिनः षोडश पदार्थाः प्रमाणादयोऽत्र भगवता गोतमर्षिणा अभिहिताः लक्षिताः परीक्षिताश्चेति तेषां पदार्थानां बलवत्त्वं प्रमाणपरिपुष्टत्वञ्च सिद्ध्यति।

नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः। व्युत्पत्त्याऽनया अनुमानात्मकः न्यायोऽभिप्रेतः। तस्य चानुमानस्य स्वरूपं पञ्चस्ववयवेषु परिस्फुटति। अवयवाश्च प्रतिज्ञा, हेतुः, उदाहरणम्, उपनयः, निगमनञ्चेति। तत्र साध्यनिर्देशात्मिका प्रतिज्ञा शब्दप्रमाणमभिव्याप्नोति। साध्यस्य साधनं हेतुरनुमानम्, दृष्टान्तबोधकमुदाहरणवाक्यं प्रत्यक्षम्। उदाह्रियते धर्मयोः साध्यसाधनभावो येन वाक्येनेति व्युत्पत्तिरुदाहरणवाक्यस्य। उदाहरणापेक्षः साध्यस्योपसंहारोऽर्थात् शाब्दनिश्चयः उपनयवाक्यमुपमानमभिव्याप्नोति। उदाहरणसिद्धव्याप्तिकहेतुमत्तया साध्यमिहोपसंह्रियते न स्वरूपेणेत्यत्र तात्पर्यटीका।

निगम्यन्ते समर्थ्यन्ते संबद्ध्यन्ते इति निगमनम्। हेतुवाक्योल्लेखेन सहात्र साध्यस्यार्थात् प्रतिज्ञावाक्यस्य पुनर्वचनं भवति। प्रतिज्ञावाक्ये य एव पदार्थः साध्यतया निर्दिष्ट आसीदत्र तस्यैव सिद्धतया निर्देशो भवति।

न्यायावयववाक्येषु ऐषु प्रमाणचतुष्टयं सम्भूयार्थात् मिलित्वा साध्यपदार्थं साधयति। निगमनं तु प्रतिज्ञादिवाक्यचतुष्टयस्यैकवाक्यतां विधाय अभिप्रेतमर्थं प्रतिपादयति। अत्र न्यायानुमतप्रमाणानां समन्वयेन सर्वथा बलशालिनी प्रक्रिया पदार्थं साधयत्यतोऽत्र नैव सन्तिष्ठते विचिकित्सा। अस्या एव न्यायप्रक्रियायाः पूर्वाङ्गतया प्रसिद्ध्यन्ति संशयप्रयोजनदृष्टान्तपदार्थाः। आश्रयो भवत्यस्याः सिद्धान्तश्चतुर्विधोऽपि। स्वरूपं भवति अवयवपञ्चकम्। उत्तराङ्गं च भवति तर्कनिर्णयौ।

अस्या न्यायप्रक्रियाया सम्यगुपयोगस्तु कथास्वर्थात् वादजल्पवितण्डासु सञ्जायते। यत्र तत्त्वबुभुत्सू वादे विजिगीषू च जल्पवितण्डयोः प्रवृत्तौ भवतः। अत्रैव भवत्युपयोगः हेत्वाभासपदार्थस्य। यतो हि हेतुवदाभासमानमर्थादसद्धेतुं हेतुतया व्यवहृत्य वादी प्रतिवादिनं प्रतिवादी वा वादिनं निग्रहीतुमर्हति। अतएव हेत्वाभासपरिज्ञानं विना कथास्वधिकार एव न भवति कस्यापि। हेत्वाभासाभिज्ञस्तु कथावसरे परेणाभिहितं हेत्वाभासमवबुध्य तमभिधाय च प्रतिस्पर्धिनं निगृहीतं कर्तुं प्रभवेत्। अतएव वादजल्पवितण्डात्मकस्य कथात्रयस्य लक्षणानन्तरं सङ्गतिं वीक्ष्य सूत्रकृता हेत्वाभासः समुद्दिष्टः लक्षितश्च।

अयमभिप्रायः सद्धेतुः पञ्चरूपोपपन्नो भवति कदाचित् चतूरूपोपपन्नोऽपि। तत्र साध्यवति पक्षे, निश्चितसाध्यवति स पक्षे च हेतोः सत्त्वं, निश्चितसाध्याभाववति विपक्षे च तदसत्त्वं, पक्षे साध्याभावसाधकस्य समानबलशालिनः हेतोः असत्त्वं, प्रमाणान्तरेण साध्यसाधकहेतोबाधितत्वं च यत्र विद्यते स एव हेतुः साध्यं साधयितुं

प्रभवति। केवलान्वयिनि हेतौ साध्यस्यैव सर्वत्र विद्यमानतया तत्र साध्याभावस्य निश्चिताधिकरणात्मकः विपक्षः नोपलभ्यते। एवं केवलव्यतिरेकिहेतौ साध्यस्य कुत्रापि निश्चयाभावेन कोऽपि सपक्षस्तत्र न भवतीति चतूरूपता हेतोरत्र गमकत्वं साधयति। यतोहि हेतोरेकैकस्योपर्युक्तस्य रूपस्य धर्मस्य वा विरहे एकैकः हेत्वाभासः भवति। अतएव पञ्चैव भवन्ति हेत्वाभासः। तत्सूत्रं यथा-

सव्यभिचारविरुद्धप्रकरणसमसाध्य समकालातीताः हेत्वाभासाः।१/२/४/ तद्यथा हेतोः विपक्षसत्त्वेऽर्थात् विपक्षासत्वविरहे सव्यभिचाराभिधः हेत्वाभासो भवति। सपक्षसत्त्वविरहे विरुद्धाभिधः हेत्वाभासो भवति, पक्षे समानबलशालिनः साध्याभावसाधकस्य हेतोः सत्त्वे प्रकरणसमनामा हेत्वाभासो भवति। पक्षे हेत्वभावे साध्यसमनामा हेत्वाभासो भवति। प्रमाणान्तरेण यदि हेतुर्बाधितो भवति कालातीत-नामा हेत्वाभासो भवति। अग्रे लक्षणोदाहरणाभ्यामेते स्फुटतां यास्यन्ति।

अत्रोदेति जिज्ञासा सामान्यलक्षणेन विना विभाग एतेषां कथं सगच्छत इति। तत्र भाष्यकृद्वात्स्यायनः जयन्तभट्टश्चाभिलपतः हेत्वाभासपदस्य व्युत्पत्त्यैवास्य सामान्यं लक्षणमवगम्यत इति। हेतुवदाभासते इति व्युत्पत्त्या यः पदार्थः हेतोर्लक्षणैक-देशेन समन्वितोऽपि सकललक्षणैः रहितः हेतुरिव प्रत्येति स भवति हेत्वाभास-पदार्थः। भाष्यकृदभिदधाति-'हेतुलक्षणाभावादहेतवो हेतुसामान्याद् हेतुवदाभासमानाः' इति।। न्यायमञ्जरीपंक्तिरप्येवमेव-अत्र हेत्वाभासश्रुतिरेव निर्वचनसहिता सामान्यलक्षणं बोधयति। अहेतवो हेतुवदाभासन्ते इति हेत्वाभासाः। लक्षणैकदेशयोगाच्च हेतुवदाभास-मानमहेतोरप्युपपद्यते' इति। तार्किकरक्षायां वरदराजोऽप्यभिदधाति कथामिमामेव-

**हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः।**
**हेत्वाभासाः पञ्चधा ते गौतमेन प्रपञ्चिताः।।**

अत्र भाष्यपंक्तौ हेतुसामान्यपदमुल्लिखितं दृश्यते। तत्र सामान्यपदं सादृश्यपरम्। किमत्र सादृश्यमिति जिज्ञासायां वार्तिकं तात्पर्यटीका च व्याख्यातः – द्विधात्र सादृश्यं विद्यते प्रयोगगतं प्रयोज्यगतं च। प्रतिज्ञावाक्यानन्तरं यथा पञ्चम्यन्तपदेन हेतोः प्रयोगो भवति तथैव हेत्वाभासस्यापीति प्रयोगगतं सादृश्यम्। यद्वा यत्साधकस्य लिङ्गस्य त्रैलक्षण्यं धर्मस्तत्रैकतमधर्मानुविधानम्, द्विलक्षणस्यान्यतरधर्मानुविधानं वा विवक्षितमिति प्रयोज्यगतं सादृश्यम्। तस्मात् सिद्ध्यति यत् प्राचीनानां मते हेतोः केनापि लक्षणेन हेत्वाभासेऽपि भवितव्यम्। अन्यथा न भवेत् हेत्वाभासस्तत्र। वरदराजः स्फुटमभिलपति हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताश्च हेत्वाभासाः भवन्तीति।

१) लक्षणविभागसूत्रे हेत्वाभासस्य पञ्च प्रकारताभिहिता। तत्र तस्य प्रथमः प्रकारः सव्यभिचारः। अस्य लक्षणं सूत्रकृदभिलपति – अनैकान्तिकः स व्यभिचार

इति (१/२/५/) अत्र सव्यभिचारपदं लक्ष्यम् अनैकान्तिकपदं च लक्षणम्। सूत्रकृत् सर्वत्र लक्ष्यपदं पश्चादभिदधाति।

यद्यपि तात्पर्यटीकायां वाचस्पतिमिश्रोऽभिलपति – सूत्रेऽस्मिन् समानार्थकाभ्यां पदाभ्यां लक्ष्यलक्षणयोर्निर्देशः। योऽनैकान्तिकः स सव्यभिचारः, यः सव्यभिचारः सोऽनैकान्तिक इति। यस्यानैकान्तिकपदार्थोऽप्रसिद्धः प्रसिद्धश्च सव्यभिचारपदार्थस्तं प्रति अनैकान्तिक इति लक्ष्यं सव्यभिचार इति लक्षणम्। यस्य च सव्यभिचार पदार्थोऽप्रसिद्धः प्रसिद्धश्चानैकान्तिकपदार्थस्तस्य सव्यभिचार इति लक्ष्यम् अनैकान्तिकं च लक्षणम्। प्राचीननैयायिकस्य न्यायमञ्जरीकर्तुः जयन्तभट्टस्याप्येतदनुमतमिति पश्यामः। तथापि अनैकान्तिकपदस्य कोऽर्थ इति जिज्ञासायां लोकतस्तदधिगतिरिति वार्तिककारः। यद्वस्तु लोकतो न गम्यते तत्र शास्त्रमर्थवद् भवति। यत्पुनर्लोकत एव गम्यते तत्रोपदेशोऽनर्थक इति। लोकप्रसिद्धत्वेनोक्तप्रायमित्यत्र तात्पर्यटीका। लोकसिद्धश्च उभयान्तसन्निहितोऽनैकान्तिक इति। यो हि कस्मिँश्चिदेकस्मिन् अन्ते पक्षे नियतो न भवति। विपरीतपक्षेऽपि तद्वृत्तिता नैयत्यं वा दृश्यते तस्मादुभयान्तसन्निहितो हेतुरनैकान्तिक इति।

अत्र प्रागुक्तवाचस्पतिमिश्रवचनस्य विरोधं पश्यामः। यदि लोकत एवानैकान्तिक पदार्थावगतिस्तर्हि कथं तत्पदस्याप्रसिद्धिरुक्तेति तु विचारणीयं भवत्येव। जयन्त भट्टस्तु पिककोकिलपदयोरर्थावगतिदृष्टान्तेन तद्विरोधस्य परिहारार्थं प्रयतमानो दृश्यते। यस्य पिकपदार्थावगतिः स तस्मात् कोकिलपदार्थमवगच्छति यस्य च कोकिलपदार्थावगतिः स तस्मात् पिकपदार्थमवगच्छतीति।

वार्तिककृदभिप्रायं परिष्कुर्वन् तात्पर्यटीका कृदिहानैकान्तिकपदगतं नञर्थं पर्युदासमर्थात् भेदमभिधत्ते। 'पर्युदासपक्षस्तावदस्माकमभिमतः उपपन्नतरश्चैति कण्ठतोऽभिदधाति। पर्युदास उत्तरपदं निषेधति। यथा अब्राह्मण इत्युक्ते ब्राह्मणभिन्नस्यावबोधो भवति। तथैवानैकान्तिक इत्युक्ते ऐकान्तिकभिन्नस्य परिज्ञानं भवति। सामानाधिकरण्यसंबन्धेन यो हेतुः साध्याधिकरण एव नियतरूपेण विद्यते असौ ऐकान्तिकः। यथा वह्न्यधिकरणे एव धूमः नियतरूपेण विद्यते नान्यत्र। तस्माद् भिन्न अनैकान्तिको भवति। एवंविधस्य हेतोः साध्याभावाधिकरणे विपक्षेऽपि च विद्यमानता भवति।

यद्यपि नैयायिकानां प्रतिस्पर्धी बौद्धाचार्य अनैकान्तिकपदगतस्य नञः पर्युदासार्थकत्वे स्वपक्षनियतादैकान्तिकाद्भिन्नः सर्वहेतुरनैकान्तिक एव भवेदिति एक एव हेत्वाभासः स्यात् महर्षिणोक्तस्य तत्पञ्चसंख्यात्वं नोपपद्येत इत्यभ्यलपत्। तथापि एकमात्रपक्षे नियतावृत्तिर्यस्य हेतोः स ऐकान्तिकस्तद्भिन्नः पक्षद्वय-वृत्तिर्हेतुरनैकान्तिक इत्यर्थकरणेन नानुपपत्तिः। न भवन्त्येवं विधाः विरुद्धादयो

हेत्वाभासा इति। तस्मान्नात्र पञ्चत्वसंख्याहानिः। तात्पर्यटीकायामियं कथा कण्ठरवेणाभिहिता।

जयन्तभट्टस्तु प्रसज्यप्रतिषेधमर्थादत्यन्ताभावमपि अनैकान्तिक पदगतस्य नञोऽर्थमभिधायानुपपत्तिं बौद्धाचार्योक्तामिह परिहरति। यदुक्तमैकान्तिकाभावः निरूपाख्यः व्यभिचाराव्यभिचारौ च भावधर्मौ इति कथं सव्यभिचारो भवेदनैकान्तिक इति। अत्र समाधानं यथा अश्राद्धभोजीत्यत्र कृत् प्रत्ययेन श्राद्धान्नं यो न भुङ्क्ते तथाविधः पुरुषस्तत्पदेनाभिमतः न तु श्राद्धे भोजनाभाव एवार्थस्तथा एकान्तनियतस्य प्रतिषेधेन विशिष्टहेतुव्यक्तिरेवोच्यते न केवलमभाव इति नोक्तानुपपत्तिः।

एवं व्यभिचारः साध्यसाध्याभावाधिकरणयोर्विद्यमानो हेतुर्भवति। तथा चात्र वार्त्तिकम् – कः पुनरयं व्यभिचारः साध्यतज्जातीयान्यवृत्तित्वम् यत्खलु साध्य तज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते तद् व्यभिचारि तद्वृत्तित्वं व्यभिचारस्तेन सह वर्तत इति सव्यभिचारः।

अयं हि हेत्वाभासप्रकारः पक्षे साध्यसाध्याभावयोर्धर्मावधिकृत्य सन्देहस्य प्रयोजको भवति। वैशेषिकमते सव्यभिचारोऽयं सन्दिग्धपदेनोल्लिख्यते। यदुक्तं 'विरुद्धासिद्धसंदिग्धमलिङ्गं काश्यपोऽब्रवीत्' अत्र सन्दिग्धपदेन सव्यभिचार एवाभिप्रेतः। यस्मादयं सन्देहप्रयोजको भवति। अस्योदाहरणं यस्माद् विषाणी तस्माद् गौरिति चानैकान्तिकम्। महिषं पक्षतयाभ्युपगम्य यदि कश्चिदनुमिनोति गौरयं विषाणित्वात्। विषाणित्वं (शृङ्गवत्वं) यथा गोत्वविशिष्टासु गोव्यक्तिषु दृश्यते तथैव गोत्वधर्मरहितासु महिषादिव्यक्तिष्वपि दृश्यत एव। विपक्षासत्त्वरूपहेतुलक्षणाभावेनेदं विषणित्व-मिहानैकान्तिकहेत्वाभासः।

यद्यपि भाष्यकृद् दृष्टया सपक्षविपक्षयोर्वृत्तिरेकविध एव साधारणतयानैकान्तिको भवति, यस्योदाहरणमिह प्रदर्शितम्। तथापि वार्त्तिककृदपरमपि प्रकारमस्य प्रदर्शयति यो हि असाधारणनाम्ना प्रसिद्ध्यति। 'व्यावृत्तिद्वारेणाभिधीयमानोऽयमुभयान्तव्यावृत्ते-रनैकान्तिक' इति वार्त्तिकपङ्क्त्या तज् ज्ञायते।

उभयान्तयोर्मध्ये कस्याप्यन्तस्याधिकरणे यो हेतुर्न सन्तिष्ठते केवलं पक्ष एव विद्यते असावसाधारणोऽनैकान्तिको भवति। सपक्षविपक्षयोरविद्यमानता एव उभयान्तव्यावृत्तिपदाभिप्रायः। यथा शब्दोऽनित्यः शब्दत्वादित्यनुमाने शब्दत्वहेतुः केवलं पक्ष एव शब्दे विद्यते न भवतोऽस्य हेतोः सपक्षविपक्षौ यत्र तद्वृत्तित्वमवृत्तित्वं भवेत्।

न्यायमञ्जर्यां जयन्तभट्टस्तु असाधारणं सव्यभिचारं नाङ्गीकरोति यतो हि भाष्यानुगाम्ययं नानुमनुते तम्। भाष्येऽस्य चर्चैव नास्ति। असौ कथयति 'विपक्षाद्

व्यावृत्तिर्यस्य हेतोर्नास्ति स सव्यभिचारः। अन्यतमहेतुरूपरहितत्त्वमनैकान्तिकलक्षण-मिह विवक्षितम्। असाधारणविरुद्धाव्यभिचारिणौ तु न संभवत एव हेत्वाभासाविति न व्याख्यायेते'।

२) कथकस्य स्वीकृतं सिद्धान्तं साध्यतया निर्दिश्यमाणं यो हेतुर्विरुणद्धि स भवति विरुद्धाभिधः हेत्वाभासस्य द्वितीयः प्रकारः। तथा च सूत्रम् – सिद्धान्तमभ्युपेत्य तद् विरोधी विरुद्धः। १/२/६/ इति। सूत्रगतं सिद्धान्तपदं विशेषविवक्षया साध्यपरम्। तस्य विरोधी हेतुर्विरुद्धो सिद्धान्तपदं विशेषविवक्षया साध्यपरम्। तस्य विरोधी हेतुर्विरुद्धो भवति। फलतः साध्याभावव्याप्यो हेतुर्विरुद्ध इति सूत्रकाराभिप्रायः

अस्योदाहरणं भाष्यकारः सांख्यदर्शनसिद्धान्तविरोधेन प्रदर्शयति। सांख्यदर्शनस्य सिद्धान्तः सत्कार्यवादस्तत्र पदार्थः स्वकारणेषु तिरोभवति न तु नाशमेति। तत आविर्भवति न तूत्पद्यते। तत्र सिद्धान्तरूपेण सांख्यदर्शने पदार्थजातस्य नित्यत्वं स्वीकृतमस्ति। प्रकृतेः विकारः सांख्यदर्शने पदार्थजातस्य नित्यत्वं स्वीकृत मस्ति। प्रकृतेः विकारः (महदादित्रयोविंशति पदार्थः) धर्मलक्षणावस्थापरिणामेभ्यः प्रच्युतो भवति नित्यत्वप्रतिषेधात्। अत्र विकारः पक्षः, तस्य धर्मलक्षणावस्थापरिणामेभ्यः प्रच्युतिः साध्यम्, अनित्यत्वं हेतुः। यतो हि चिरकालमेकस्वरूपेण नावतिष्ठते, अतः अनित्यं भवति विकारः। यद्यप्यनित्यत्वसहिष्णुर्नित्यत्वं सांख्यसम्मतं तथापि ऽसत्कार्यवादी न्यायसंप्रदायः परिणामवादं नाङ्गी करोति। मतेऽस्मिन् मूलकारणे विकाराणां पदार्थानां वा लयस्तिरोभावो वा न संभवति, येन विनाशप्रतिषेधात् नित्यत्वं स्यात् अतः अनित्यत्वं हेतुः सांख्यसिद्धान्तं विकारपदार्थस्य सर्वदा विद्यमानत्वं व्याहरन्ति इति विरुद्धहेत्वाभाससमन्वयः।

विश्वनाथस्तु स्वकीयवृत्तौ अयं वह्निमान् हृदत्वादित्युदाहरणं प्रादर्शयत्। अत्र साध्याभावः वह्न्यभावस्तस्य व्याप्यो हेतुः हृदत्वं साध्यस्य वह्नेः साधकतयोपन्यस्तः सन् विरुद्धः हेत्वाभासो भवति। अत्र वार्तिककारोऽभिलपति–यो हेतुः स्वीकृतं सिद्धान्तं बाधते अथवा स्वीकृतेन सिद्धान्तेन बाधितो भवति एतौ द्वौ सिद्धान्तविरोधितया विरुद्धाभिधः हेत्वाभासः भवति। अर्थात् यः पदार्थः स्वीकृतं सिद्धान्तं स्वरूपतः विरुणद्धि, यश्च पदार्थः निश्चितरूपेण स्वीकृतसिद्धान्तस्य साधने न भवति स विरुद्धो भवति। एवं सति अनुक्ताः समस्ताः विरुद्धाः हेत्वाभासाः संगृहीताः भवन्ति। यद्यप्येवं सति सर्वस्यैव हेत्वाभासस्य विरुद्ध एव समावेशो भवति एक एव विरुद्धाभिधः हेत्वाभासो भवेत् पञ्चविधत्वं नोपपद्येत। अत्रोच्यते सत्यमेक एवायं विरुद्धाभिधः हेत्वाभासः अत्रैवान्येषां चतुर्णामपि समावेशः। तथापि यत्र यत्र सव्यभिचारत्वादयो विभिन्नाः विशेषधर्माः उपलभ्यन्ते तत्र तत्र ते तत्तन्नाम्ना हेत्वाभासाः व्यवहृताः भवन्ति। यत्र कोऽपि विशेषधर्मो नोपलभ्यते तत्र पृथगेव स्वतन्त्रः विरुद्धः

व्यवहृतो भवति। अन्यथा सव्यभिचारविरुद्धः, प्रकरणसमविरुद्ध इति रूपेण व्यवहारः भवतु। तस्मात् वार्त्तिककृतः दृष्ट्या हेत्वाभासः दुष्टहेतुर्वा सर्व एवार्थात् पञ्चविधोऽपि साध्यसाधनत्वरूपहेतुलक्षणहीनः विरुद्धलक्षणे समावेशमर्हति।

पश्चात् लक्षणान्तरमपि विरुद्धस्यायमभिदधाति। तद्यथा 'प्रतिज्ञाहेत्वोर्विरोधः विरुद्धहेत्वाभासो भवति'। अत्र समस्या भवति पञ्चमाध्याये निग्रहस्थानं प्रतिज्ञाविरोधमुक्तमस्ति यत्र प्रतिज्ञावाक्येन सह हेतुवाक्यस्य विरोधो दृश्यते। तद् निग्रहस्थानं कथं विरुद्धहेत्वाभासो भवितुर्महति। अस्य समाधानमेवमाह वार्त्तिककृत्–विरोधः उभयाश्रितो भवति। विरोधस्याश्रयभेदविवक्षया निग्रहस्थानं भवति विरुद्धश्च। यत्र प्रतिज्ञावाक्यमाश्रित्य हेतुवाक्यस्य विरोधः तत्र प्रतिज्ञाविरोधाभिधं निग्रहस्थानमभ्युपगम्यते। यत्र हेतुवाक्यमाश्रित्य प्रतिज्ञावाक्यस्य विरोधस्तत्र विरुद्धाभिधः हेत्वाभासो भवति। उद्योतकरोऽत्र उदाहरणेन विषयं विशदयति यथा नित्यः शब्दः उत्पत्तिधर्मकत्वादिति हेतुविरोधस्योदाहरणम्। शब्दः पक्षः नित्यत्वं साध्यम् तस्य विरोधी हेतुरुत्पत्तिधर्मकत्वम्। प्रतिज्ञाविरोधस्योदाहरणं गुणव्यतिरिक्तं द्रव्यमर्थान्तरस्यानुपलब्धेरिह द्रव्यं पक्षः गुणभेदः साध्यम् अर्थान्तरानुपलब्धिर्हेतुः अत्र प्रतिज्ञाया एव विरोधः भवति। भिन्नविषयस्यानुपलब्धिः कथं द्रव्ये गुणभेदं साधयेत् अपितु अर्थान्तरस्यानुपलब्ध्या द्रव्यपदार्थे गुणाभेद एव भवितुमर्हतीति।

खद्योतव्याख्यायां विद्यासागरः गङ्गानाथझा कथयति विरुद्धस्य स्वभावविषये प्राचीननवीनयोर्मतभेद इव दृश्यते। 'यो हेतुर्यं कञ्चिदभ्युपगतं सिद्धान्तं व्याहन्ति स विरुद्ध इति भाष्यमतम्। अत एव नित्यत्वप्रतिषेधो हेतुर्नित्यत्वसिद्धान्तविरोधेन विरुद्ध इति दृष्टान्तेनापि सूचितम्। यत्साध्यसाधनायोपन्यस्तो हेतुस्तद् विरुद्धमेव यः साधयति स विरुद्धहेतोः साध्यासामानाधिकरण्यम् विरुद्ध इत्यर्थः। इति नवीनमतम्। वार्तिके सूत्रस्य भाष्योक्तं व्याख्यानमुपवर्ण्य व्याख्या नान्तरमुपन्यस्तम् 'प्रतिज्ञाहेत्वोर्वा विरोधो विरुद्धो हेत्वाभास' इति एतदेव नवीनमतस्य मूलमिवाभाति'।

३) तृतीयः हेत्वाभासः प्रकरणसमः। यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम इति लक्षणं तस्य सूत्रकारोऽभिलपति। अत्र यस्मात् साध्यसाधनार्थं प्रयुक्तात् हेतोः प्रकरणस्यार्थात् संशयविषयीभूतस्यानिर्णीतस्य पक्षप्रतिपक्षरूपधर्मद्वयस्य-चिन्ता जिज्ञासा भवति मध्यस्थस्य, कतरः पक्षः साधीयान् पक्षधर्मः प्रतिपक्षधर्मो वा, स हेतुरेव निर्णयार्थमपदिष्टः सन् प्रकरणसमनामा हेत्वाभासो भवति। अत्र प्रक्रियते साध्यत्वेनाधिक्रियते यदिति व्युत्पत्त्या प्रकरणपदं वादिप्रतिवादिनोः साध्यतया परिगृहीतं धर्म द्वयमभिधत्ते। इमौ धर्मौ एकस्मिन्नधिकरणे परस्परं विरुद्धौ भूत्वावस्थितौ मध्यस्थस्य संशयमुत्पाद्य पक्षप्रतिपक्षतां भजतः इति भाष्यकृत्। अत एव पक्षः प्रतिपक्षश्च प्रकरणपदार्थतया प्रसिद्ध्यतः। चिन्तापदं संशयानन्तरं निर्णयात् प्राक् या

जिज्ञासा मध्यस्थस्य जायते तामभिदधाति। तत्र प्रयोजको हेतुः निर्णयायाभिहितोऽपि निर्णेतुमसमर्थः प्रकरणसमनामा हेत्वाभासो भवति।

यथा शब्दः अनित्यः नित्यधर्मानुपलब्धेरिति नैयायिकेनोक्ते मीमांसकः कथयति शब्दः नित्यः अनित्यधर्मानुपलब्धेरिति। अत्र प्रकरणसमहेत्वाभासो भवति। यदि शब्दे प्रमाणसिद्धः अनित्यपदार्थस्य धर्मविशेषः स्यात् तर्हि मीमांसकस्य हेतुरसिद्धतां गच्छेत्। नैयायिकः अनित्यधर्मं हेतुतया नैवाभिधाय नित्यधर्मानुपलब्धिमभिदधाति। तस्मात् सिद्ध्यति शब्दे अनित्यधर्मः नोपलभ्यते। एतज् ज्ञात्वैव प्रतिवादी अनित्य-धर्मानुपलब्ध्या शब्दस्य नित्यत्वमनुमिनोति। एकस्मिन्नधिकरणे शब्दे नित्यत्वानित्यत्वौ न संभवतोऽतः वादिप्रतिवाद्युक्तौ हेतू साध्यस्यैकतरस्य निर्णये न प्रभवतः। किन्तु शब्देऽनित्यत्वनित्यत्वरूपप्रकरणे जिज्ञासायाः प्रयोजकौ भवतः। तस्मादिह उभावपि हेतू असद्धेतू भवतः प्रकरणसमहेत्वाभासस्योदाहरणं भवति।

परिशुद्धावुदयनाचार्यस्तु प्रकरणचिन्तापदेन जिज्ञासाविशेषमभिधत्ते। सव्यभिचार स्थले हेतुज्ञानेनानुमानस्य धर्मिणि साध्यधर्मवत्त्वमधिकृत्य संशयो भवति पश्चात् संशये सति तत्र साध्यधर्ममधिकृत्य जायते जिज्ञासा। किन्तु प्रकरणसमस्थले हेतुद्वयस्य प्रयोगेण पूर्वोत्पन्नस्य संशयस्य निवृत्तिर्न भवति केवलं जिज्ञासा जायते उभयोः हेत्वोः कतरो हेतुः समीचीन इति। तस्मात्सव्यभिचार प्रकरणसमयोः भेदः सर्वथा सिद्ध्यतीति।

४) चतुर्थो हेत्वाभासः साध्यसमः। साध्याविशिष्टः – साध्यत्वात् साध्यसम इति लक्षणं तस्य सूत्रकारेणाभिहितम्। साध्याविशिष्टपदमिह लक्षणम् साध्यसमपदं च लक्ष्यम्। यो हेतुः साध्यधर्मेणाविशिष्टस्तुल्यः असौ साध्यसमः साध्यसदृशोऽर्थात् असिद्धः हेत्वाभासो भवति। तस्यापि हेतोः साध्यस्येव साधनीयत्वादित्यभिप्रायः।

अयमभिप्रायः प्रमाणसिद्ध एव पदार्थः कस्यापि साध्यधर्मस्य साधको हेतुर्भवति। किन्तु वादिप्रयुक्तो हेतुर्यदि साध्यधर्मस्येव पूर्वतः असिद्धस्तर्हि प्रमाणेनासौ हेतुरपि साधनीयो भवति। फलतः हेतुरयं साधनीयतां गच्छन् साध्यधर्मतुल्यः साध्यसमो भवति।

छायाद्रव्यं गतिमत्त्वात् इत्यत्र छायां पक्षः द्रव्यत्वं साध्यं गतिमत्त्वं हेतुः। छायायां द्रव्यत्वं साधयितुं प्रयुक्तो हेतुः गतिमत्त्वं साध्यसमो भवति। यतो हि छायायां गतिमत्त्वं प्रतिवादिदृष्ट्या असिद्धः साध्यमिव साधनीयतां याति। किं गतिशीलस्य पुरुषस्येव तस्यानुगमनं छाया करोति अथवा गतिशीलपुरुषेणाच्छादितस्यालोकसमूहस्य अविच्छिन्ना असन्निधिः भूमौ आलोकसंयोगाभावः, अभाव एव प्रत्यक्षेणोपलभ्यते, यस्य नाम छायेति साधनीयतां याति। यतो हि प्रतिवादिदृष्ट्या आलोकविशेषाभाव एव छायापदेनोच्यते। तत्र वस्तुतः गतिक्रिया नास्त्येव। गतेस्तत्र भ्रमो भवति।

अतश्छायायामसिद्धो गतिमत्त्वहेतुः द्रव्यत्वं तत्र साधयितुं न प्रभवति। उदयनाचार्यः किरणावल्याम् छायाया अभावमर्थं समर्थयन्नाह – तस्मादावरके द्रव्ये गच्छति यत्र यत्र तेजसोऽसन्निधिस्तत्र तत्र छायाग्रहणादन्यदेशता निबन्धनो गतिभ्रम इति।

वार्त्तिककारोऽस्य त्रैविध्यमुपपादयति स्वरूपासिद्धः, आश्रयासिद्धः, अन्यथा-सिद्धश्चेति।

छाया द्रव्यं गतिमत्त्वादिह यथा द्रव्यत्वं छायायां साध्यते तथा गतिमत्त्वमपि। अतः गतिमत्त्वं हेतुः स्वरूपतः असिद्धो भवति।

यदि देशान्तरे छायायाः दर्शनात् तत्र गतिमत्त्वं प्रसिद्ध्यति। अतः न स्वरूपतः असिद्धोऽयं गतिमत्त्वहेतुरित्युक्तौ आश्रयासिद्धत्वमिह भवति। सति द्रव्यभावे छायायाः देशान्तरे दर्शनं भवितुमर्हति द्रव्यभाव एव तत्रासिद्धः।

यदि कश्चिदभिदध्यात् मा भूत् सती छाया सा तु प्रभाया अभावात्मिका विद्यते। अतः आश्रयासिद्धौ न भवति तत्र। देशान्तरे यत्र प्रभाया अभावः स्यात् सा द्रष्टुं शक्येत्युक्तौ अत्रान्यथा सिद्धो भवति। आवरकसन्तानादसन्निधिसन्तानस्तेजसः छायेत्यावरकद्रव्ये सर्पति सति तेजसोऽसन्निधिविशिष्टद्रव्यं यद् यदुपलभ्यते तत्तत् छाया भवतीति गतिमत्त्वमन्यथा सिद्धतामेति। आवरकसन्तानादसन्निधिसन्तानस्तेजसः छाया। आवरके द्रव्ये सर्पति सति तेजसः असन्निधिविशिष्टं यद् यद् द्रव्यमुपलभ्यते तत्तत् छाया भवति गतिमत्त्वमन्यथासिद्धो भवति।

वाचस्पतिमिश्रस्तात्पर्यटीकायामुदाहरणान्तराण्यपि प्रस्तौति यथा शब्दोऽनित्यः चाक्षुषत्वात्। अत्र चाक्षुषत्वं हेतुः स्वरूपतः असिद्धो भवति। ईश्वरः तनुभुवनादीनां न कर्ता अशरीरत्वादित्यत्र ईश्वरात्मक आश्रय एव न सिद्ध्यति। स श्यामो मित्रातनयत्वात् पारदृश्यमान मित्रातनयस्तोमवदत्र अन्नपानपरिणतिभेद निबन्धनत्वं रूपभेदस्येत्यन्यथा सिद्धम्।

उदयनाचार्यस्तु न्यायकुसुमाञ्जलौ तृतीयस्तवके (७ का.) कथयति अनुमाने हेतुतया गृहीते पदार्थे साध्यधर्मस्य व्याप्तिविशिष्टपक्षधर्मता निश्चयस्य अनुमितौ चरमकारणत्वं भवति। एतन्निश्चयस्याभावे हेतुरसिद्धदोषविशिष्टः सन् असिद्धहेत्वाभासपदेनाभिधीयते। स च त्रिविधः इति उपपादितः प्रागेव। अत्र विशेषमभिदधात्ययं यथा धर्मिरूपाश्रयस्यार्थात् पक्षस्यासिद्ध्या आश्रयासिद्धिर्भवति तथैव सर्ववादिसिद्धे धर्मिणि यदि तस्य साधनाय कस्यचित् हेतोः प्रयोगः सञ्जायते तर्हि सोऽपि हेतुराश्रया सिद्धो भवति। यतो हि सिद्धपदार्थतया तस्मिन् धर्मिणि संशयस्य तद्योग्यताया वा पक्षेऽभावेन सन्दिग्धसाध्यवत्त्वं पक्षत्वं न संभवति अतः पक्षरूपः आश्रयः असिद्धो भवति।

अयमेवाश्रयसिद्धः सिद्धसाधननाम्नाभिहितो भवति। एतन्नाभिन्नः हेत्वाभासो नाम्नी कर्तव्यः। पक्षे साध्यसन्देहः सन्देहयोग्यता वा पक्षता भवतीति प्राचीन-नैयायिकः। सिद्धसाधनस्थले पक्षत्वमेव दुर्लभं भवति।

उदयनदृष्ट्या हेतोः सोपाधित्वमेवान्यत्वासिद्धत्वम्। अस्यैव नामान्तरं भवत्यप्रयोजकम्। नास्ति प्रयोजकमनुकूलस्तर्को यस्य स अप्रयोजकः। नायं हेत्वाभासाद् भिद्यते अत एवान्यथा सिद्धेऽस्यान्तर्भावः। उपाधिव्युत्पत्तिस्तु उप समीपे स्वधर्मम् आदधाति इत्युपाधिः। जपाकुसुमस्य रक्तिमा समीपस्थे स्फटिके आहितः सन् रक्तः स्फटिक इति प्रतीयते। यथा अयं धूमवान् वह्नेरित्यत्र आर्द्रेन्धनसंयोग उपाधिर्भवति। वह्निरूपहेतौ आर्द्रेन्धनसंयोगः स्वधर्मव्याप्तिमादधाति। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधिलक्षणं प्रसिद्धम्। उपाधौ साध्यव्याप्तिसत्त्वेऽपि व्याप्तिरहितहेतौ स स्वगतव्याप्तिमाधातुमर्हति। प्रकृते आर्द्रेन्धनसंयोगस्य धूमात्मकसाध्यव्यापकत्वे सत्यपि हेतोः वह्नेः अव्यापकत्वं दृश्यते। अयोगोलके वह्निसत्त्वेऽपि आर्द्रेन्धनसंयोगो नास्ति। अयञ्चोपाधिर्द्विविधः निश्चितोपाधिः सन्दिग्धोपाधिश्च। यत्र साध्यव्यापकता साधनाव्यापकता च निश्चिता स निश्चितोपाधिः। यत्र च ते सन्दिग्धे स सन्दिग्धोपाधिः। यथा प्रथमप्रकारस्योदाहरणम् आर्द्रेन्धनसंयोगः। द्वितीयप्रकारस्योदाहरणम् स श्यामो मित्रातनयत्वात् अत्र शाकपाकजत्वम्। न निश्चितमपितु सन्दिग्धमेव।

५) यत्र हेतोरर्थात् साधनीयार्थस्यैकदेशः कालात्ययेन युक्तः अर्थात् साध्यधर्मिणि बलवता प्रमाणेन साध्यधर्माभावनिश्चयत्वात् साध्यसंशयस्य कालमतीत्य प्रयुक्तो भवति स हेतुः कालातीतनामा हेत्वाभासो भवति कालात्ययापदिष्टः कालातीतः। १/२/९/ साध्यसंशयस्य कालात्यये सति यो हेतुरपदिश्यते हेतुतया प्रयुक्तो भवति स भवति कालातीत इति सूत्रार्थः। तथा च भाष्यम्—कालात्ययेन युक्तो यस्यार्थैकदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीतः। यथा नित्यः शब्दः संयोगव्यङ्ग्यत्वात् रूपवत्। दृष्टान्तवाक्येन ज्ञायते शब्दः पूर्वतः विद्यमान एवावतिष्ठते इति प्रतिज्ञार्थः। नित्यत्वं शब्दस्य न्यायसिद्धान्तप्रतिकूलमत एव वार्त्तिककारः समादधाति — न ब्रूमः नित्यः शब्द इति अपितु अवतिष्ठत इति प्रतिज्ञार्थः। यथा प्रदीपेन सह घटस्य संयोगः घटे पूर्वतः विद्यमानस्य रूपस्य प्रत्यक्षं प्रति हेतुः। प्रदीपसंयोगेन पूर्वतः विद्यमानस्य घटरूपस्य प्रत्यक्षं भवति, अतः रूपे संयोगव्यङ्ग्यता। प्रदीपसंयोगः रूपस्य व्यञ्जकः सन् सहकारीकारणं भवति घटस्थे रूपप्रत्यक्षे। एवमेव शब्दोऽपि संयोगव्यङ्ग्यः। भेरीदण्डयोः संयोगविशेषेण काष्ठकुठारयोः संयोगविशेषेण वा जन्यते शब्दविशेषस्य प्रत्यक्षम्। एवमेव शब्दोऽपि संयोगव्यङ्ग्यो भवति। तस्मात् पूर्वत एवावतिष्ठते शब्दः, अभिनवशब्दस्य कदम्बगोलकन्यायेन वीचीतरङ्गन्यायेन वा नोत्पत्तिर्भवतीति। अयं पूर्वपक्षः। समाधानं तु रूपशब्दयोः स्थितिर्भिद्यते। शब्दः

रूपमिव संयोगव्यङ्ग्यो न भवति। अतएव रूपसाधर्म्यं संयोगव्यङ्ग्यत्वं शब्दे न भवितुमर्हति। फलतः शब्दस्य नित्यत्वं साधयितुं हेतुर्नास्ति, हेत्वाभास, एवायं हेतुः। संयोगव्यङ्ग्यत्वहेतोरेकदेशः विशेषणं वा संयोगः नावतिष्ठते शब्दश्रवणकालपर्यन्तमतएव कालात्ययविशिष्टः। घटेन सह प्रदीपस्य संयोगे सत्येव तत्कालं घटरूपस्य प्रत्यक्षं भवति। अतएव संयोगोऽयं घटरूपस्य भवति व्यञ्जकः, रूपं च तादृशसंयोगव्यङ्ग्यम्। भेरीदण्डसंयोगः काष्ठकुठारसंयोगो वा यदा निवर्तते तदा दूरस्था व्यक्तिः शब्दं शृणोति तस्मात् यथा रूपप्रत्यक्षकाले तस्य व्यञ्जकः प्रदीपसंयोगः विद्यमानोऽवतिष्ठते तथा शब्दश्रवणकाले भेरीदण्डयोः काष्ठकुठारयोः वा संयोगः विद्यमानो नावतिष्ठते। अत्र हेतोरेकदेशः संयोगः कालात्यये सत्यपदिष्टः। अतएव हेतुरयं कालातीतो हेत्वाभासः।

उदयनाचार्यस्तु बलवता प्रमाणेन बाधितं हेतुं सूत्रोक्तं कालातीतमभिदधाति। अत एव तदनुगामी वरदराजमिश्रोऽप्यभिदधाति–'कालातीतो बलवता प्रमाणेन प्रबाधितः'। अत एव कालातीतः बाध नाम्ना बाधित नाम्ना च व्यपदिश्यते। यद्यपि हेत्वाभासानां पञ्चविधानामप्यवान्तरभेदमादाय असंख्याः प्रकाराः हेत्वाभासानां भवन्ति न्यायवार्त्तिके ते प्रदर्शिता अपि। तथापि सर्वेषां प्रकाराणां हेत्वाभासेषु पञ्चस्वेवान्तर्भावः कृतः। अतएव 'विभागोद्देशो नियमार्थ' इति वार्त्तिकपंक्तिः संगच्छते। जयन्तभट्टोऽपि न्यायमञ्जर्यां कथयति–

**अत एव च शास्त्रेऽस्मिन् मुनिना तत्त्वदर्शिना।**
**पक्षाभासादयो नोक्ताः हेत्वाभासास्तु दर्शिताः।।** इति।

विद्यासागरः गङ्गानाथ झा महाशयः न्यायप्रकाशेऽभिलपति तर्कानुमानादेर्यद्यपि बहवो दोषाः संभवन्ति निर्दिष्टाश्च प्राचीनन्यायग्रन्थेषु न्यायवार्त्तिकादिषु तथापि विचारे कृते सति अनुमानस्य यावन्तो संभाविताः दोषाः सर्वे पञ्चसु हेत्वाभासेषु आन्तर्भावमर्हन्ति। अनुमानस्य त्रीणि प्रधानवाक्यानि भवन्ति– १) पक्षताऽर्थात् पक्षे साध्यं वर्तते नवेति सिद्धं कर्तुमवशिष्यते। पक्षधर्मता– २) हेतुः पक्षे वर्तत इत्यस्य निरूपणम्। ३) यत्र यत्र धूमस्तत्र तत्र वह्निरिति हेतुसाध्ययोः साहचर्यनियमोऽर्थात् व्यप्तिनिश्चयः। पक्षधर्मतायां भ्रमप्रमादाभ्यां हेतुरेव दुष्टो भवेत्। अतः पक्षधर्मतादोषः हेतुदोष एव भवेत्। पक्षे द्विविधः दोषः संभवति पक्षः प्रसिद्धो यदि न भवेत् तदा आश्रयासिद्धिर्भवेत्। यदि प्रसिद्धेऽपि पक्षे हेतुर्न संतिष्ठेत तदा स्वरूपासिद्धो भवेत्। यदि च व्याप्तौ दोषः स्यात् सव्यभिचारो भवेत्। पुनश्च छलजातिनिग्रहस्थानानां विचारावसरे येन केनापि रूपेण हेतुदोष एवावतिष्ठते इति विज्ञास्यते। तस्मात् अनुमानस्थले सर्वे दोषाः हेतुदोषेष्वेवान्तर्भूताः भवितुमर्हन्ति। प्रयोक्तृषु एवंरीत्या हेत्वाभासविचारेण दोषाणामवगतिरपि सुलभा भवति। हेतोरेव केवलस्य परिज्ञानेनानुमानस्य

सर्वे दोषाः दृष्टौ समागताः भवेयुरिति। पञ्चानामपि हेत्वाभासानां लक्षणपरिज्ञानेन विचारावसरे हेतुः सदसद्वेत्यवगत्यानुमानं साध्वसाधु वेति परिज्ञातुं शक्यते। एवं प्राचीनन्यायदृष्ट्या हेत्वाभासचर्चां विधाय प्रसङ्गसंगत्या शास्त्रान्तरेषु हेत्वाभासविचारस्य साम्प्रतमिह विहङ्गमावलोकनं क्रियते।

न्यायदर्शनस्य समानतन्त्रे वैशेषिके हेत्वाभासस्य त्रैविध्यमुपवर्णितम्। अप्रसिद्धोऽनपदेशोऽसन् सन्दिग्धश्चानपदेशः (३/१/१५/) इति वैशेषिकसूत्रम् अप्रसिद्धः असन् सन्दिग्धश्चेति त्रीन् हेत्वाभासस्य प्रकारान् अभिदधाति। अपदेशपदेन हेतुर्गृह्यते अत एवानपदेशपदेन हेत्वाभासस्य ग्रहणम्। अत्र न्यायानुमतस्य विरुद्धस्य असन् पदेनासिद्धस्य सन्दिग्धपदेनानैकान्तिकस्य ग्रहणम्। हेतोस्त्रैरूप्यात् पक्षसत्त्व-सपक्षसत्त्वविपक्षासत्त्वरूपात्ः त्रिविध एव हेत्वाभासो भवत्यत्र। कालातीतः प्रकरण-समश्चात्र नाङ्गीकृतौ। अतएव विपरीतमतो यत्स्यादेकेन द्वितयेन वा। विरुद्धासिद्ध-सन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्। इति हि प्राचीनोक्तिः संगच्छते हेतुरेकेन द्वितयेन रूपेण विपरीतः हेत्वाभासो भवति – इति तदर्थः।

किन्तु प्रशस्तपादाचार्यः हेत्वाभासस्य चातुर्विध्यमुपपादयति अनिश्चयात्मकं ज्ञानमनध्यवसितमयमधिकं मनुते। नैयायिकस्यासाधारणोऽनैकान्तिक इहानध्यवसित-पदेन परिगृह्यते। न्यायलीलावत्यां वल्लभाचार्यः कथयति – तदाभासाश्चत्वारः असिद्धविरुद्ध सव्यभिचारानध्यवसिताः' इति। न्यायकन्दलीकृतः श्रीधराचार्य-स्यापीहानुमतिः। प्रशस्तपादाचार्यदृष्ट्या सामान्यप्रत्ययादेव संशय उत्पद्यते। अतः असाधारणधर्मेण संशयस्यानुत्पत्त्या तस्यानैकान्तिकेऽन्तर्भावः न संभवति। अपितु अनध्यवसायस्य कारणमसाधारणधर्मो भवति। अयमप्रसिद्धोऽनपदेश इति वचनादविरुद्ध इति प्रशस्तपादाचार्यपङ्क्त्या अप्रसिद्धस्यार्थात् विरुद्धस्यापरः प्रकारोऽनध्यवसितो भवितुमर्हतीति सूत्रकृतस्त्रैविध्यसिद्धान्त इह संरक्षितो भवति।

उपस्कारे (२/२/१७) शङ्करमिश्रः स्फुटमभिलपति – समानतन्त्रे गौतमीये अनध्यवसाय ज्ञानस्यानभ्युपगमादसाधारणो धर्मः संशयकारणत्वेनोक्तः'। न्यायलीलावती कण्ठाभरणे पुनरयमभिदधाति–'पनसादौ किंस्विदिदमितिज्ञानमसाधारणधर्मज्ञान-जन्यमनध्यवसायः। स च वैशेषिकमते संशयादभिन्न इति। पुनश्च उपस्कारे ३/१/१७। स्पष्टमाह–'परन्तु विरुद्धा सिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदित्यभिधानात् सूत्रकारस्वरसो हेत्वाभासत्रित्वे चकारस्तूक्तसमुच्चयार्थ इति तत्त्वम्।

यद्यपि व्योमवत्यां पदार्थधर्मसंग्रहव्याख्यायां व्योमशिवाचार्यः वैशेषिकसूत्रगत चकारस्यानुक्तसमुच्चयार्थकत्वमुक्त्वा न्यायदर्शनस्येववैशेषिक दर्शनेऽपि हेत्वाभासस्य पाञ्चविध्यमङ्गीकरोति। शिवादित्यमिश्रस्तु सप्तपदार्थीग्रन्थे भावज्ञ इव न्यायानुमतैः

पञ्चभिः हेत्वाभासैः सहानध्यवसितमादाय षड्विधान् हेत्वाभासान् प्रत्यपादयत् तथापि वैशेषिकस्य मुख्यधारा हेत्वाभासस्य त्रैविध्यमेव मनुते इति प्रागेव प्रतिपादितम्।

बौद्धाचार्यः हेतोस्त्रैलक्षण्यमभ्युपगम्य तथा विधेन हेतुना साध्यमनुमिनोति। त्रिरूपाल्लिङ्गाद् यदनुमेये ज्ञानं तदनुमानमिति न्यायप्रवेशः स्फुटमभिलपति। काव्यालङ्कारे भामहाचार्यः स्पष्टं कथयति–हेतुस्त्रिलक्षणो ज्ञेयो हेत्वाभासः विपर्ययात्। न्यायबिन्दौ बौद्धाचार्यः धर्मकीर्तिः त्रयाणां हेत्वाभासानां नाम निर्दिशति–असिद्धविरुद्धा नैकान्तिका-स्त्रयो हेत्वाभासाः इति।

जैनदर्शनस्य प्रमाणनयतत्त्वालोकालङ्कारे वादिदेवसूरिमहोदयोऽत्र बौद्धवैशेषिक-मतमनुसरति। किन्तु दिगम्बरजैनसम्प्रदायः अकिञ्चित्करनामानमधिकमेकं हेत्वाभासं मनुते। परीक्षामुखसूत्रे हेत्वाभासा असिद्ध विरुद्धानैकान्तिका किञ्चित्करा इत्युक्तम्। यत् साध्यं पूर्वतः सिद्धं प्रत्यक्षप्रमाणेन वा बाधितं तस्य साधनाय प्रयुक्तो हेतुरकिञ्चित्करनामा हेत्वाभासो भवति। किन्तु नायं सर्वानुमतः रत्नप्रभाचार्येण निराकृतः युक्त्या प्रमाणनयतत्त्वालोकव्याख्यायाम्। तादृशस्थले अतिरिक्तः हेत्वाभासः नाङ्गी कार्यः। यो हि पक्षदोषोऽसौ हेतुदोषः भवितुं नार्हति इति तद्युक्तिः।

मीमांसका अपि हेत्वाभासस्य त्रैविध्यमेव मन्वते। एतन्मते अनुमानस्थले तुल्यबलशालिनौ साध्यसाध्याभावसाधकौ हेतू न संभवतः। एकतरस्य तत्र दुर्बलत्वमवश्यं भवितुमर्हति। अन्यथा सदैवैतादृशस्थले साध्यधर्ममधिकृत्य संशयो न निवर्तेत।

शास्त्रदीपिकायां पार्थसारथिमिश्रस्तु कथयति– हेतुद्वयोर्मध्ये एकतरहेतो-र्दुबलत्वेऽपि मध्यस्थः यावत्कालमेकतरं हेतुं दुर्बलं नावगच्छति तावत्कालं सत्प्रतिपक्षत्वं प्रकरणसमत्वं वा हेत्वोरवतिष्ठेदेव। अनिश्चितबलाबलत्वमेवेह दुर्बलत्वम्। अत एव उभयत्र हेत्वोर्दुष्टहेतुता भवत्येव। परमयं दोष अनित्य इति प्राचीननैयायिक-मीमांसकयोरनुमतम्। यदैवैकतरहेतोः दुर्बलत्वं ज्ञातं भवेत् तदैवायं निराकृतो भवेत्। हेत्वाभासस्य त्रैविध्यं मन्यमानः पार्थसारथिमिश्रः अनैकान्तिकस्य प्रकारद्वयं मनुते सव्यभिचारः स प्रतिसाधनञ्चेति। कालातीतोदाहरणे प्रतिज्ञाभासं पक्षाभासं वा स्वीकृत्य तमपि हेत्वाभासं निराकरोति इति मीमांसकस्योपपद्यते हेत्वाभासत्रैविध्यम्। यथामति प्रस्तुता प्राचीनन्यायदृष्ट्या हेत्वाभासचिन्ता प्रसङ्गसंगतिं वीक्ष्य विहङ्गमदृष्ट्या शास्त्रान्तराणामपि हेत्वाभासमधिकृत्य विचार उपस्थापितः।

# ऋग्वेदभूमिका

वीरनारायण पाण्डुरङ्गी

सम्प्रति प्राप्यमाणेषु ऋग्वेदसंस्करणेषु गुरुशिष्यपरम्परासु च समानर्षिसम्बन्धिनो मन्त्रा अनेकेषु मण्डलेषु विकीर्णा दृश्यन्ते। योऽयं विभागो नात्यन्तं हृदयङ्गमो वर्तते। अतो मन्त्रद्रष्टॄणाम् ऋषीणाम् ऋषिकाणाञ्चाधारेण ऋग्वेदमन्त्रान् विभाज्य पाठकानां सौकर्याय नूतनं संस्करणं जयपुरीयम् ऋग्वेदसंस्करणमिति नाम्ना विहितम् आचार्यदयाकृष्णेन। अत्र सूक्तानामन्यथा सन्निवेश एव कृतः, न तु मन्त्रानुपुर्व्याः पुनारचना। अस्य संस्करणस्य आङ्ग्लभाषया रचिताया भूमिकाया एव संस्कृतानुवाद एषः।

(दिवङ्गतेन विविधदर्शनाध्ययनकृतमतिना प्रो. दयाकृष्णेन ऋग्वेदस्य ऋष्याधारितं नूतनं विभागमाश्रित्य नूतनं संस्करणं कर्तुमिष्टमासीत्। तदनुसारेण आङ्ग्लभाषया इयं भूमिका विरचिता। यदाहं जयपुरमागतः तदा मम सकाशे इदं दत्वा संस्कृतभाषान्तरणं कारितवांश्च। तदभ्यन्तरे २००७ क्रिस्तशके स पञ्चत्वमाप।

इदानीमुपलभ्यमाना ऋक्संहिता मूलरूपेणैवं नासीत्, किन्तु अन्यैवानुपूर्वी तस्याः आसीदिति तस्य सारः। मध्वाचार्यैः अयं विषयः अनुमोद्यते एव, क्वचित् मूलवेदगतान् कांश्चन भागान्, क्वचित् एकस्मिन्ननुवाके कांश्चन मन्त्रान्, क्वचित् एकस्मिन्नेव मन्त्रे उत्तरार्धं निष्कृष्य नूतनतया एव आनुपूर्वी भगवता वेदव्यासेन रचिता इत्येव तैः ऋग्वेदभाष्ये उक्तत्वात्। मतमिदं केषाञ्चित्साम्प्रदायिकानां न संमतमित्यत्र नास्ति संशयः। नापि च दयाकृष्णस्य प्रशस्ततमवैदिकार्थज्ञानित्वाभावे, तथापि बहवो विषयाः अत्र तेन प्रतिपादिताः वस्तुतो विचारणीयाः सन्ति। अस्मिन्नेव विषये २००७ क्रिस्तवर्षस्य मार्चमासे तेन व्याख्यानमपि ज.रा. राजस्थानसंस्कृत-विश्वविद्यालये दत्तम्। विदुषामवगाहनाय संस्कृतभाषान्तरणमत्र प्रकाश्यते–डॉ. वीरनारायण पाण्डुरङ्गी।

विदुषां पुरतः समुपस्थाप्यमानमिदम् ऋग्वेदस्य पुनस्संस्करणं यदस्माभिः ''जयपुरीयम् ऋग्वेदसंस्करणम्'' इत्याख्यायते, मन्त्रद्रष्टॄणाम् ऋषीणाम् ऋषिकाणां चाधारेण विभक्तं सत् पठितॄणां विनूतनं सौकर्यमादधाति। परमत्र सूक्तानाम् अन्यथा सन्निवेश एव विरचितो, न तु मन्त्रानुपूर्व्यां काचित् पुनारचना।

कार्यमिदं बहोः कालादरभ्यैव कर्तव्यतया अवशिष्टमासीत् यतः वर्तमाने काले उपलभ्यमानेषु ऋग्वेदसंस्करणेषु तथा गुरुशिष्यपाठक्रमे च एकस्यैव ऋषेः संबन्धिनो मन्त्राः अनेकेषु मण्डलेषु विक्षिप्ततया दरीदृश्यन्ते, यश्च विक्षेपः नात्यन्तं हृदयङ्गमो वर्तते।

**वंशमण्डलानि**

पूर्वमेव एतादृशः प्रयत्नो विहित इत्येतत् दृश्यते यतः द्वितीयमारभ्य सप्तमान्तं मण्डलेषु क्रमशः (१) आङ्गिरसः-भार्गवः (२) विश्वामित्रः, (३) गौतमः, (४) आत्रेयः, (५) भरद्वाजः (६) वसिष्ठ इत्येते ऋष्यन्वयाः एव प्रायो दृश्यन्ते इति विदुषां ज्ञातमेव। परन्तु एतेषाम् ऋष्यन्वयानाम् ऋषीणां वा संबन्धिन एव बहवो मन्त्राः प्रथम-अष्टम-नवम-दशम-मण्डलेष्वपि दृश्यन्ते इत्येव विचारणीयोंऽशः। संभाव्यते च इदानीमुपलभ्यमानसंहितायाम् एतानि मण्डलानि अनन्तरमायोजितानीति कारणेन एतन्मण्डलचतुष्टयस्था मन्त्राः पूर्वोक्तेषु तत्तदन्वयीयमण्डलेषु नान्तर्भाविता इति।

अत्र चान्योऽप्यंशः अवश्यं विचारणीयः यत् एतेषु अन्वयसंबन्धिमण्डलेष्वपि तत्तदन्वयासंबन्धिनः बहवः ऋषयः मन्त्रद्रष्टृतया आयोजिताः, येषाम् ऋषीणाम् तादृशी उपस्थितिः किंकारणिका इति। अयं च विषयः एतावता कालेन सम्यक् न विवेचितः, असुलभविवरणश्च वर्तते।

**तृतीयमण्डलम्**

तथा हि . . . विश्वामित्रान्वयसंबन्धिनि तृतीयमण्डले तावत् उत्कीलः कात्यः (३.१५-१६), गाथी कौशिकः (३.१९-२२) देवश्रवाः तथा देववातः भारतः (३.२३) तथा नद्यः, याः ३.३३ सूक्ते केषांचन मन्त्राणां द्रष्टृतया सूच्यन्ते, इत्यादयः अन्येऽपि ऋषयो दृश्यन्ते।

किं च अन्योऽपि अनेकत्र आवर्तमानः अत्यन्तमाश्चर्यकरः विषयोऽस्ति यत् एक एव मन्त्रः कदाचित् निर्धारणं विना द्वयोः ऋष्योः नाम्ना उल्लिखितः इति। यथा ३.५४-५५-५६ इति सूक्तत्रयं तथा ३.३८ सूक्तं च प्रजापतिविश्वामित्रस्य प्रजापतिवाच्यस्य वा इति विकल्पेन ऋषिद्वयसंबन्धितया उल्लिखितम्। तथैव ३.६२

सूक्तमपि गाथिनविश्वामित्रस्य वा जमदग्नेर्वा संबन्धि इति उल्लिखितम्। तथैव ३. ३१ सूक्तमपि कुशिक-ऐशीरथेः विश्वामित्रस्य वा इति।

**चतुर्थमण्डलम्**

पूर्वोक्तान्वयनियमे केवलं तृतीयमण्डलम् अपवाद इति चिन्तयितुं न शक्यते, यतः अनेकत्र अयं नियमो भज्यते। तथा हि गौतमान्वयसंबन्धितया प्रसिद्धे चतुर्थे मण्डले ४.४२ सूक्ते त्रसदस्युः पौरुकुत्स्यः, तथा ४.४३-४४ सूक्तयोः पुरुमीळ्ह-अजामीळ्हौ सौहोत्रौ ऋषी दृश्यन्ते। तथा गौतमान्वयसंबन्धिनि चतुर्थमण्डले गोतमराहूगणस्य सूक्तं किमपि न दृश्यते, यश्च गोतमराहूगणः नवमे मण्डले ७४-९३ पर्यन्तसूक्तानां दृष्टृतया उल्लिखितः। अयमपि विषयः अतीव आश्चर्यकरोऽस्ति।

**पञ्चममण्डलम्**

पञ्चम-षष्ठसप्तममण्डलानां स्थितिरपि नातीव भिद्यते। तथाहि पञ्चममण्डले आत्रेयमण्डलत्वेन ख्याते २ सूक्ते वृषो जानः, १५ सूक्ते वृषो जानः, १५ सूक्ते धरुण आङ्गिरसः, २४ सूक्ते गौपायना लौपायना वा बन्धुः सुबन्धुः श्रुतबन्धुः विप्रबन्धुश्च, २७ सूक्ते त्रैवृष्ण्यः त्र्यरुणः पौरुकुत्स्यः त्रसदस्युः भारतः अश्वमेधश्च राजानः (अत्रिर्भौम इति केचित्) २९ सूक्ते गौरिवीतिः शाक्त्यः, ३३-३४ सूक्तयोः प्राजापत्यः संवरणः, ३५-३६ सूक्तयोः प्रभूवसुः आङ्गिरसः, ४४ सूक्ते काश्यपः अवत्सारश्च ऋषयः दृश्यन्ते। सूक्तानां पुनस्संनिवेशस्यावश्यकतायामतीव संशयालुरपि पुरुषः पूर्वोक्तविषयम् अवगणयितुं न शक्नोति। किं च आङ्गिरसीयत्वेन प्रथितं द्वितीयं मण्डलं विहाय अस्मिन् मण्डले धरुण-आङ्गिरसस्य उपस्थितिरपि विचारणीया।

**षष्ठसप्तममण्डले**

परन्तु षष्ठसप्तममण्डलयोः स्थितिः किंचिदिव समीचीना इव दृश्यते। भारद्वाजमण्डलेऽस्मिन् एक एव भारद्वाजभिन्नः ऋषिः शंयुबार्हस्पत्यनामा ४४-४५-४६-४८ सूक्तानां द्रष्टृत्वेन उल्लिखित इति तत्कारणम्। तथा वसिष्ठमण्डलत्वेन ख्याते सप्तममण्डलेऽपि १०१-१०२ सूक्तयोः कुमार आग्नेय एक एव वसिष्ठभिन्न ऋषिः मन्त्रद्रष्टृत्वेन उल्लिखितः।

**द्वितीयमण्डलम्**

तथा आङ्गिरसीयत्वेन ज्ञाते द्वितीयमण्डलेऽपि २७-२८-२९ सूक्तेषु कूर्मो गार्त्समदः गृत्समदो वा ऋषित्वेन ज्ञायते इति।

संभूयैतत्समस्तं निराकरोति मण्डलानां शक्यविवरणां संभाव्यविवरणां वा

सम्यगवस्थितिम्।

**स्वकीयमण्डलं विहाय अन्यत्र ऋषीणां दर्शनम्**

इतोऽपि आश्चर्यकरं यत् एते अन्वयमध्यपातिनः ऋषयः, तथा अनेकवारं तदन्वयीयप्रमुखश्चापि ऋषिः तदन्वयीयमण्डलं विहाय अन्यत्रापि मण्डलेषु ऋषित्वेनोल्लिखिता इति। तथा हि सप्तममण्डलस्य प्रायः एकाकी ऋषिः मैत्रावरुणिर्वसिष्ठः नवमे ९० तथा ९७ सूक्तयोः, तथा दशमे १३७ सूक्ते च ऋषितया दृश्यते।

इयमेव च स्थितिरन्येषां मण्डलर्षीणामपि। तथा हि **तृतीयमण्डलीयाः विश्वामित्राः** प्रथमे नवमे दशमेऽपि मण्डले दरीदृश्यन्ते। विश्वामित्रान्वयीयेषु एकादशसु ऋषिसु केवलं चत्वार एव विश्वामित्रीये तृतीयमण्डले दृश्यन्ते। विश्वामित्रीयेषु अवशिष्टेषु ऋषिषु द्वौ प्रथममण्डले, ययोश्च अतीव प्रसिद्धः विश्वामित्रः मधुच्छन्दा अन्यतरः, चत्वारः केवलं दशममण्डले, अन्ये तु प्रत्येकमनेकेषु प्रथम-नवम-दशमेषु वा दृश्यन्ते।

**चतुर्थे गौतमीयत्वेन** प्रथिते मण्डले केवलं वामदेवः गौतमः एव दृश्यते, न त्वन्यः कोऽपि गौतमः। परन्तु वामदेवः गौतमस्तु ९.१०७ सूक्ते वा ९.६७ सूक्ते वा सप्तर्षिषु अन्यतमत्वेन नैवोल्लिखितः। पूर्वोक्तयोः सूक्तयोः सप्तर्षिषु अन्यतमत्वेनोल्लिखितः गौतमो राहूगणश्च स्वकीये गौतममण्डले नैवोल्लिखितः अपि तु प्रथममण्डले दृश्यते। तथैव नोधा गौतमोऽपि प्रथम-अष्टमनवममण्डलेषु दृश्यते। तदित्थं गौतमीयेषु त्रिषु ऋषिषु द्वौ स्वकीये मण्डले न दृश्येते।

**पञ्चमे आत्रेयीयमण्डले** इयं स्थितिः। आत्रेयाः अपि अष्टम-नवम-दशममण्डलेषु दृश्यन्ते। तत्र आहत्य ३९ संख्याकेषु आत्रेयीयेषु ३४ आत्रेयाः स्वकीये पञ्चमे उल्लिखिताः। अन्ये तु एवम् द्वौ...... केवलम् अष्टममण्डले ७३-७४ तथा ९१ सूक्तेषु, एकः दशममण्डले १४३ सूक्ते केवलम्, अन्यौ द्वौ नवमे, तथा श्यावाश्व आत्रेयः अत्रिर्भौमश्चेति द्वौ प्रमुखौ ऋषी अष्टम-नवममण्डलयोः दृश्यन्ते। तयोः श्यावाश्व आत्रेयः ८.३५-३७-३८ इति चतुर्णां सूक्तानां, ९.३२ इति एकस्य सूक्तस्य ऋषित्वेनोल्लिखितः। अत्रिर्भौमश्च नवमे ९.६७, ९.८६, ९.१०७ इति सूक्तत्रयस्य ऋषिः। परन्तु यदि सर्वे आत्रेयाः एकस्मिन् मण्डले अन्तर्भावनीयाश्चेत् ते सर्वे पञ्चमे एव मण्डले स्युः।

**षष्ठे भारद्वाजमण्डले** च, भारद्वाजान्वयीयेषु द्वादशसु केवलं चत्वार एव दृश्यन्ते। अन्ये तु एवं-चत्वारः केवलं दशमे एव, एकः केवलं नवमे एव,

अवशिष्टेषु प्रायः, षष्ठे नवमे च दृश्यन्ते। एतदन्वयीयः वृद्धतमः प्रमुखश्च ऋषिः भारद्वाजः बार्हस्पत्यः दशमेऽपि दृश्यते।

**वसिष्ठान्वयस्य** तु अत्यन्तमाश्चर्यजनिका स्थितिः। तत्र यदि इन्द्रप्रमतिवासिष्ठर्षिकं ९.९७ सूक्तं तथा मृळीकवासिष्ठर्षिकं १०.१५० सूक्तं च त्यजामश्चेत् केवलं मैत्रावरुणिर्वसिष्ठः एव वसिष्ठान्वयप्रतिनिधिर्भवेत्, नान्यः कोऽपि। परन्तु अयं मैत्रावरुणिः वसिष्ठः नवमे ६७, ९०, ९७, १०७ सूक्तेष्वपि दृश्यते। एतदीयसूक्तसंख्यापरिपूरणे एतान्यपि सूक्तानि परिगणनीयानि।

**द्वितीयमण्डलीयर्षित्वेन प्रख्यातयोः आङ्गिरसभार्गवान्वययोस्तु** स्थितिराश्चर्यकरा। तत्र प्रथमं कारणमिदं यत् द्वाभ्यां विभिन्नाभ्याम् अन्वयाभ्याम् एकं मण्डलं तथा सर्वाणि सूक्तानि अन्वयद्वयीयर्षिकत्वेन उल्लिखितानि, यत्र च केवलं २.४-५-६-७ सूक्तानि, येषां सोमाहुतिर्भार्गवः ऋषिः, तथा २.२७-२८-२९ सूक्तानि येषां कूर्मो गृत्समदः ऋषिः, अपवादीभवन्ति।

तथा केवलम् आङ्गिरसमात्रर्षिकम् एकमपि सूक्तं मण्डलेऽस्मिन् नास्ति। एवम् आङ्गिरसाः अन्येषु अन्वयमण्डलभिन्नेष्वपि मण्डलेषु प्रथम-अष्टम-नवम-दशमेषु दृश्यन्ते। परं धरुण आङ्गिरसः तथा प्रभूवसुः आङ्गिरसः ५.१५, ५.३५ सूक्तयोः ऋषित्वेनोल्लिख्येते।

एवं च आङ्गिरसाः केवलम् आङ्गिरसमण्डलभिन्नेषु एव मण्डलेषु दृश्यन्ते। तेषां संख्यापि न लघीयसी। आहत्य ४४ आङ्गिरसाः इदानीन्तने ऋग्वेदे दृश्यन्ते, ये च स्वकीये मण्डले न दृश्यन्ते। यदि च सर्वे आङ्गिरसाः एकत्र स्थापनीयाः तर्हि ते सर्वे द्वितीयमण्डले एव भवेयुः।

**भार्गवान्वयस्थितिः** किञ्चिदिव भिद्यते। तथा हि—तत्रैकः भार्गवान्वयीयः स्वकीये द्वितीयमण्डले दृश्यते अन्ये दश भार्गवास्तु अन्वयमण्डलभिन्नेषु प्रथम-अष्टम-नवम-दशमेष्वेव दृश्यन्ते। तस्मात् तेऽपि सर्वे भार्गवाः द्वितीयमण्डले स्थापनीयाः।

**आङ्गिरसभार्गवान्वययोः अन्या समस्या** तु एवम् ९.१०७ सूक्ते सप्तर्षित्वेन आङ्गिरसः कोऽपि न परिगणितः। जमदग्निर्भार्गवः तत्र सप्तर्षिषु परिगणितः। परन्तु सः द्वितीयमण्डले नैव दृश्यते। ८.१०१, ९.६२,९.६५, ९.६७ इत्येवं सूक्तानि तदृषिकाणीत्युल्लिख्यते। तथा जमदग्निरित्येकः ३.६२ तथा १०.१३७ सूक्तयोः ऋषि दृश्यते।

तदित्थं परिस्थितिरीदृशी संपद्यते यत्र अन्वयीमण्डलत्वेन ख्याते तदन्वयीयः

ऋषि: न दृश्यते। तथा १०.१३७ सूक्तेऽपि न आङ्गिरस:, नापि भार्गव:, नापि च जमदग्निर्भार्गव:, अपि तु केवलं जमदग्निर्दृश्यते।

तथा आत्रेयान्वयहीयत्वेन ख्याते पञ्चममण्डले आङ्गिरसोपस्थितिरपि समस्यां प्रादुर्भावयति। आत्रेयान्वयस्तु प्रथित: ९.१०७ तथा १०.१३७ सूक्तयो:, न तथा आङ्गिगरसान्वय: तत्कथं ते अतदीयमण्डले प्रविष्टा: इति। संभाव्यते च द्वितीयं मण्डलम् अन्वयीयायाम् ऋग्वेदसंहितायाम् अनन्तरकाले योजितमिति। तथा तृतीय-चतुर्थ-पञ्चम-षष्ठमण्डलानि अपि स्वकीया: समस्या: आबिभ्रत्येव (विशेषत: पञ्चमम्), यत्प्रतिपादितं परस्तात्, परन्तु स्थाने तेषां नाम अन्वयमण्डलानीति।

तदित्थम् आङ्गिरसा: भार्गवाश्च ऋषय: स्वकीये द्वितीये मण्डले स्थापनीया: येन ते ऋग्वेदीये ऋषिसमूहे स्वकीयां महितिं प्राप्नुयु:। एवमेव अल्पेन परिमाणेन अन्येषामपि ऋषीणां स्वकीयमण्डलेषु संस्थापनोपयोगी पुनस्संनिवेशविशेष: करणीयो भवति। तदेतत्प्रयोजनमुद्दिश्य ऋग्वेदस्य पुनर्व्यवस्थापनप्रयत्न: प्रकृतसंस्करणे अस्माभिर्विहित इति सप्रश्रयमावेद्यते।

परन्तु प्रयत्नेनानेन समग्रसंहितायां केवलं चतुर्णामेव ऋषीणां प्राधान्यं तथा बाहुल्येन ऋषिता च प्रद्योतिता भवति। ते च ऋषय:। १ मैत्रावरुणिर्वसिष्ठ:, २. भरद्वाज: बार्हस्पत्य:, ३. वामदेव: गौतम:,तथा ४ गाथिनो विश्वामित्रश्चेति।

**काण्वान्वय:**

किं चायं प्रयत्न: पूर्वमलक्षितं कञ्चन ऋग्वेदीयमन्वयमपि पुरत: संस्थापयति यश्च अन्वय: काण्वानाम्, प्रथमे अष्टमे च मण्डले संलक्ष्यते। इदं च काण्वान्वयपुनरन्वेषणं प्रसिद्धवैदिकपण्डितस्य सातवलेकरोपाख्यदामोदरशर्मण: श्रमस्यैव फलम्, यत: तेनैव महानुभावेन प्रथम-अष्टम-नवममण्डलेषु दृश्यमानानां काण्वर्षीणां सूची स्वकीये शुक्ल-यजुर्वेदीयकाण्वसंहिताया: उपोद्घाते दत्ता, तथा 'ऋग्वेदीयानां तथा काण्वसंहितास्थानां च काण्वर्षीणामभेद: संभवति न वा' इत्याशक्य ''न अभेद'' इत्युत्तरितम्। परन्तु तस्य प्रमुखं योगदानं तु ऋग्वेदीयानां काण्वर्षीनामन्वयस्य पुनरन्वेषणमेव, यद्यपि तेषां विषये किं करणीयमिति स: नैव निरचिनोत्।

तदत्र ऋग्वेदीयानां सर्वेषां काण्वर्षीणां प्रथममण्डले समावेश: उचित: येन तेषां प्रामुख्यं प्रद्योतेत। यत: प्रथमे इदानीमेव बहव: काण्वा: संलक्ष्यन्ते। परन्तु दामोदरशर्मणा तु एवं कदापि न पुनस्संनिवेशविचारे प्रवृत्तं, यत: ऋग्वेदे प्राचीनक्रमागतसंनिवेशभङ्गं वैदिकजन: नानुमनुते, मन्यते च तमिमं क्रमभङ्गम् अपौरुषेये भारतीये परमपवित्रप्रमाणे हस्तप्रक्षेपमिव।

**ऋग्वेदे आवापोद्वापाः**

परन्तु ऋग्वेदः अतीव पवित्रतया संरक्षितः सन्नपि अनेकवारम् आवापोद्वापभागेव वरीवर्ति इति नातिरोहितं विदुषाम्। यतः पतञ्जलेः काले ऋग्वेदस्य एकविंशतिशाखाः आसन्निति तेनैवोद्घोषितं, तथा चरणव्यूहसूत्रे च पञ्चशाखानामुल्लेखः संदृश्यते। कथं च शाखाभेदकारणीभूतान् पाठभेदान् विना शाखाभेदः संभवितुमर्हति? किं च अद्य शाकलशाखायां दृश्यमानाः सर्वाः देवताः निरुक्तनिघण्ट्वोः किमुपलभ्यन्ते? अस्य प्रश्नस्य उपलभ्यमानं निषेधात्मकमुत्तरं तु सूचयति निरुक्तादिरचनाकाले अस्याः संहितायाः रूपं प्रकारान्तरेण आसीदिति। किं चेदानीम् ऋग्वेदे उपलभ्यमाने नारायणदृष्टे पुरुषसूक्ते तावत् षोडश ऋचः सन्ति। परन्तु वाजसनेयिमाध्यन्दिनशाखास्थे तस्मिन्नेव सूक्ते अधिकतया षट् मन्त्राः योजिताः (वा. मा. सं. अध्यायः ३)। तथा वाजसनेयिकाण्वसंहितायां पुनः माध्यन्दिन-शाखास्थषण्मन्त्रानन्तर्भाव्य ३९ अधिकाः मन्त्राः समायोजिताः (वा.का.सं. अध्यायः. ३५)। तदित्थं काण्वाः अतीव प्रमुखाः सन्ति, तथा स्वकीयं च स्वातन्त्र्यं च बिभ्रति इति अनेन ज्ञायते। अस्मिन् अधिकप्रमाणापेक्षायां तु अभिज्ञानशाकुन्तलस्थः काण्वोऽपि परिगणयितुं शक्यः।

तथा चेदं पर्यवसितं यत् पण्डितदामोदरशर्मणा यत् कर्तव्यतया ज्ञातमासीत्, परन्तु न कृतं, तदस्माभिः क्रियमाणं वर्तते इति। तस्मात् सर्वान् काण्वान् ऋषीन् प्रथममण्डले अन्तर्भावयामः, तथा प्रथममण्डलस्थान् अन्यान्वयीयांश्च ऋषीन् तत्तदीयान्वयमण्डलेषु च अन्तर्भावयामः।

**प्रथममण्डलीयाः समस्याः**

परमनेन प्रयत्नेन पुनश्च नूतनाः समस्याः प्रादुर्भवन्ति याः इत्थम्-तत्र प्रथममण्डले अनेके ऋषयः प्रसिद्धान्वयरहिताः दृश्यन्ते। यथा १ शुनःशेप आजीगर्तिः (१.२४-३०), २, पाराशरः शाक्त्यः (१.६५-७३), ३, कश्यपो मारीचः (१, ९९), ४ त्रित आप्त्यः (१.१०५), ५ कक्षीवान्दैर्घतमस औशिजः (१-११६-१२६), ६. परुच्छेपो दैवोदासिः (१.१२७-१३९), ७. दीर्घतमा औचथ्यः (१.१४०-१६५), तथा ८. अगस्त्यो मैत्रावरुणिः (१.१६६-१९१) इति। अन्ये प्रथममण्डलीयाः ऋषयस्तु विश्वामित्र-गौतम-आङ्गिरसान्वयीया एव।

अत्र अष्टसु प्रसिद्धान्वयरहितेषु ऋषिषु शाक्त्यः, आप्त्यः, कक्षीवान्, दैवोदासिः, कश्यपश्च इति ऋषयः अष्टम-नवम-दशममण्डलेषु अन्यत्रापि दृश्यन्ते।

अत्र प्रथममण्डले कश्यपमारीचस्य संस्थितिरपि आश्चर्यजनिका। सः ९.१०७ सूक्ते सप्तर्षिषु परिगणितः, तस्य परमेकमेव सूक्तं प्रथममण्डले उपलभ्यते। अन्ये काश्यपास्तु नवममण्डले संलक्ष्यन्ते, तथैव कश्यपमारीचस्यापि।

तथा च शुनश्शेप आजीगर्तिः दीर्घतमा औचथ्यः, आगस्त्यः, मैत्रावरुणिः इत्येवं त्रयः अन्वयरहिताः केवलाः (सजातीयनामवद्रहिताः) दृश्यन्ते। सन्त्यन्येऽपि केचन न्यूनसजातीयनामवदृषिकाः। यथा परुच्छेपदैवोदासेः अस्त्यन्यः सजातीयः प्रतर्दनः दैवोदासिः (९.९६)। पराशरशाक्त्यस्यास्ति सजातीयः गौरिवीतिः शाक्त्यः (५.२९, ९.१०८, १०.७३, १०.७४)। तथा कक्षीवतः ओशिजदैर्घतमसस्य अस्त्यन्यः सजातीयः कक्षीवान् दैर्घतमसः '९.७४)। परमिदम् औशिजस्यैवापरं नामेव प्रतीयते। तथा त्रितस्याप्त्यस्य द्वित आप्त्यः (९.१०३) भुवन आप्त्यश्च (१०.१५७) सजातीयौ स्तः।

### अष्टम-नवम-दशममण्डलानि

अष्टम-नवम-दशममण्डलानामपि स्थितिरेषैव भवति। तत्रापि अन्वयीयानां तथा अनन्वयीयानां च ऋषीणां संमिश्रणं दृश्यते। अनन्वयीयेषु बहूनाम् अन्वयनाम-जाति-कर्मादिकं स्फुटतया किमपि न प्रतीयते। तत्र प्रथम-अष्टम-नवम-दशममण्डलेषु अन्वयीयानाम् ऋषीणां संख्या तावदित्थम्--आङ्गिरसाः ४२, भार्गवाः १२, विश्वामित्राः १४, गौतमाः ५, आत्रेयाः ६, भरद्वाजाः ७, वसिष्ठाः इति। एतेषु चतुर्षु मण्डलेषु अवशिष्टाः ऋषयस्तु येन केनचित् अन्वयेन न संबद्धा अपि तु स्वकीयपृथक्नामभिरेव प्रसिध्यन्ति प्रथममडलीया ऋषय इव।

### काण्वाः काश्यपाः

तदित्थं पुनर्व्यवस्थाप्यमाने ऋग्वेदे सति काण्वाः काश्यपाः प्राजापत्या इति ऋषीणां त्रयोऽन्वयाः प्रमुखतया पुर अन्तर्भवन्ति। तत्र काण्वास्तु पूर्वोक्तरीत्या प्रथम-अष्टम-नवमेषु मण्डलेषु संलक्ष्यन्ते। तेषां संख्या तु प्रायः ३० (त्रिंशत्)। १०.१३७ सूक्ते सप्तर्षिषु परिगणिताः काश्यपास्तु प्रथम-पञ्चम-अष्टम-नवम-दशममण्डलेषु दृश्यन्ते। परन्तु तेषां गणस्य मुख्याः प्रतिनिधयस्तु नवममण्डले दृश्यन्ते, यतः दशसु काश्यपेषु अन्वयान्तर्गतेषु सप्त तावत् नवमे दृश्यन्ते। अवशिष्टेषु एक एव अष्टमे (८.९७), द्वौ दशमे च (१०.१०६, १०.१६३) संलक्ष्येते। अवत्सारकाश्यपः काश्यपमारीचश्च नवमे दृश्यमानावपि क्रमेण पञ्चमे प्रथमे च एकैकस्य सूक्तस्य (५.४४,१.९९) द्रष्टारौ लक्ष्येते। तत्रापि काश्यपमारीचस्य सूक्ते प्रथममण्डलस्य एकैव ऋक् भवति।

### सोमपवमानमण्डलम्

नवममण्डले काश्यपानामुपस्थितिः, तथा काश्यपेन असितेन देवलेन वा तदीयेन पवमानदेवताकसूक्तविंशकेन मण्डलादिभागे उपस्थितिश्च आहत्य पवमानसोमस्य देवतात्वेन प्रतिष्ठापने तथा तदीयोपासने च कारणे इव प्रतीयेते। अत एव पवमानसोमस्य

नूतनतया देवतात्वप्राप्तिः, तथा तदीयोपासनार्थमेव संपूर्णमण्डलस्य प्रवृत्तिश्च समभूतामिति च संभाव्यते। संपूर्णमण्डलस्यास्य एकदेवताकत्वमपि अपूर्वमेव। यद्यपि सोमो देवतात्वेन नवममण्डलात्पूर्वमपि ज्ञातचर एव, तथापि केवलं तमेवोद्दिश्य प्रवृत्तं किमपि सूक्तं पूर्वं नोपलभ्यते। किं च सोममुद्दिश्य प्रवृत्तानां नवमदशमभिन्नमण्डलगतानां मन्त्रणां संख्यापि केवलं षट्षष्टिमिता (६६) एव। किं बहुना, पञ्चमे मण्डले सोमोद्देश्यकः मन्त्रः कोऽपि नास्त्येव। द्वितीये तु इन्द्रसोमदेवताकः एकः मन्त्रः दृश्यते। चतुर्थे तु द्वौ मन्त्रौ संलक्ष्येते, परन्तु न शुद्धसोमदेवताकौ, परन्तु सोमकसाहदेव्य इन्द्रासोमदैवत्यौ। तृतीये च प्रत्येकं मन्त्राः दृश्यन्ते। षष्ठे तु पञ्च मन्त्राः। परन्तु प्रथमे अष्टमे च क्रमेण २८ तथा २४ मन्त्राः दृश्यन्ते। सर्वमेतत्संभूय सूचयति यत् सोमाराधनं क्रमेण परिवर्धमानं सत् काश्यपानां साहाय्येन अन्ततः सोमस्यानितरसाधारणदेवतात्वप्राप्तौ पर्यवसन्नमिति। ऋग्वेदे अन्यस्याः कस्या अपि देवताया नास्त्येकं मण्डलं पूर्णतया स्तावकं यत् सोमस्य दृश्यते इत्येव सोमस्यानितरसाधारणदेवतात्वम्।

नवममण्डलं न केवलमाश्चर्यजनकम्, अपि तु अनेकविधसमस्याश्चाविर्भावयति। तथा हि इदम्प्रथमतया नवमे सप्तर्षीणां कल्पना दृश्यते (९, १०७) यया परम्परागते ऋग्वेदीयसंनिवेशे क्लेशः समुद्भावितः। सप्तर्षिषु परिगणितः कश्यपमरीचस्तावत् प्रथममण्डलीयम् एकं मन्त्रं विना पूर्णे ऋग्वेदे यत्र कुत्रापि न दृश्यते इति पूर्वमेवोक्तम्। गोतमो राहूगणः यः सप्तर्षिषु परिगणितः, स्वकीये गौतमीये चतुर्थमण्डले न दृश्यते। तथैव सप्तर्षिषु परिगणितः कश्यपः मारीचः यथा नवममण्डलं विना अन्यत्र केवलम् अष्टमे (८.२९) दृश्यते तथैव सप्तर्षिषु परिगणितः जमदग्निर्भार्गवः नवमं (९.६२, ६५, ६७) विहाय केवलम् अष्टमे एव (८.१०१) दृश्यते। तदित्थम् ऋषित्रयस्य प्राधान्येन नवममण्डले एव उपस्थितिः, तथा अन्यत्र प्राधान्येन अनुपस्थितिश्च आहत्य "सप्तर्षिकल्पना एतैरेव उद्भाविता वा" इति, तथा संभावनया "सोमस्य देवतात्वं च एतैरेव उद्भावितं वा" इति संशयद्वयमुद्भावयतः। यतः सोमस्य पूर्वत्र अनेकत्र देवतात्वेनोल्लेखेऽपि तस्य पवमानत्वं, यत् अभीष्टं, नोल्लिखितं पूर्वत्र इति।

किं च नवममण्डले, वामदेवगौतमं विहाय ऋग्वेदीयाः सर्वेऽपि प्रधानाः ऋषयः समुपलभ्यन्ते (वामदेवगौतमस्तु चतुर्थं विना अन्यत्र नैव लक्ष्यते)। तथा प्रसिद्धर्षिभिः साकं काण्वः, आङ्गिरसाः,अनानतः, पारुच्छेपिः (९.१११), त्रसदस्युः (९.११०) तथा गृत्समदः शौनकः (९.८६) इत्यादयोऽपि ऋषयः नूतनां पवमानसोमं देवतां प्रशंसन्तो दृश्यन्ते। तथा पूज्यः मैत्रावरुणिर्वसिष्ठोऽपि स्वकीयैः नवभिः पुत्रैः साकं ९.९७ सूक्ते सोमं स्तौति। काश्यपा अपि अग्रेजिगमिषवः द्वाभ्यां

काश्यपीभ्यामप्सरोभ्यां सहिता एव सोमं स्तुवन्ति (९.१०४)।

तदित्थमाहत्य नवममण्डलम् .अनेका: समस्या: उद्भावयति, विशेषत: स्वकेन्द्रितसप्तर्षिकल्पना, या इतरेभ्य: ऋषिभ्य: स्वकीयं महत्त्वं प्रख्यापयन्ति, तथा पवनमानसोमाख्यदेवताकल्पना, या च इतरदेवताभ्य: सोमं विशिनष्टि। सप्तर्षीणां ९.६७ सूक्ते नामतो ग्रहणं तथा पुन: १०.१३७ सूक्ते च तेषां पुनरावृत्ति: समस्यां वर्धयति। सर्वथापि काण्वा: आङ्गिरसा: इव काश्यपा अपि अवश्यं सम्यक् परिगणनीया एव।

**प्राजापत्यान्वय:**

एवं पुनर्योजने क्रियमाणे सति अन्योऽप्यन्वय: पुरस्तादाविर्भवति। स च प्राजापत्यान्वय:। यद्यपि ऋग्वेदीयस्य अत्यन्तप्रसिद्धसूक्तेष्वन्यतमस्य नासदीयसूक्तस्य (१०.१२९) परमेष्ठी प्रजापति: एव ऋषिरिति सर्वैर्ज्ञातमेव, तथापि प्राजापत्यान्वयस्तु प्राय: अज्ञातचर एवासीत्। तथा "कस्मै देवाय हविषा विधेम" इति प्रसिद्धमन्त्रद्रष्टाप्येक: हिरण्यगर्भ: प्राजापत्य: वर्तते (१०.१२१)। आहत्य एकादशसु प्राजापत्येषु नव दशमे एव दृश्यन्ते (१०.२०-२६, १०४, १०७, १२१, १२९, १६१, १२९, १३०, १६१, १७७, १८३)। केवलं प्रजापतिर्वाच्य: तृतीय-नवमयो:, संवरणप्राजापत्यश्च पञ्चमे दृश्येते। प्राजापत्यान्वयस्य अपरं योगदानमपीदं वर्तते यत् भाववृत्ताख्यनूतनविषय-कसूक्तद्रष्टृत्वम्। इदं भाववृत्तमेव १०.१२९. १३० सूक्तयो: देवतात्वेनापि वर्णितमित्याश्चर्यकरम्। तथा १०.१२१ सूक्तस्य "क:" (प्रजापति:) देवतात्वेन निर्दिष्ट:, तथापि तदपि सूक्तमेवविधमेव भवति।

**अन्ये अन्वया:**

तदित्थं पुनस्संनिवेशानन्तरं काण्व-काश्यप-प्राजापत्यान्वयवत् पुन: पुर आविर्भवन्त: अन्वया इत्थम्– १. ऐन्द्र: (७), २. यामायन: (७), ३. सौर्य: (४) ४. काक्षीवत् (वान्) (४), ५. आग्नेय: (४), ६. गृत्समद: (४), ७. वैरूप: (४), ८. मानव: (४) ९. बार्हस्पत्य: (४), १०. वामदेव्य: (३), ११. तापस: (३), १२. प्रगाथ: (३), १३. भारत: (३), १४. मनु: (३) १५. वैखानस: (२), १६. आथर्वण: (२) १९. विश्वावारा (२), २०. सर्प: (३), २१. वातायन: (२) इति।

तथा अन्यदप्याश्चर्यकरं वर्तते यत् एकान्वयसंबन्धिन: सर्वेऽपि ऋषय: एकस्मिन्नेव सूक्ते दृश्यन्ते यथा वार्षा गिरा: पञ्चर्षय: प्रथम १०० सूक्ते सप्त वातरशना: दशमे १३६ सूक्ते, चत्वार: शार्ङ्गा: दशमे १४२ सूक्ते च दृश्यन्ते।

## देवता ऋषिसांकर्यम्

तथा निगूढं तत्त्वान्तरं दृश्यते यत् इन्द्रः अग्निः (उभावपि सप्तवारम्) इत्यादयोऽपि ऋषितया दृश्यन्ते। तत्राप्यग्निः देवतात्वे यथा वेश्वानरादिशब्दैः विशेषयते, तथा ऋषित्वेऽपि विशेषितः तादृशशब्दैः।

यद्यपि आपातदृष्टौ सत्यामेते विषयाः अमुख्या इति प्रतीयेरन्, तथापि ऋषिसमूहे मनुः वैवस्वतः, वैखानसाः कौत्सः इत्यादयोऽप्यन्तर्भवन्ति इति यदि स्मर्यते, तदा एतेषां विषयाणां महत्त्वम् अभिव्यज्यते।

## नीचयोनयः ऋषयः

किं च अनेकेषां नीचयोनीनां (Tribal) ऋषित्वेनोल्लेखोऽपि एतदुपोद्बलको भवति। यथा अनेकत्र सर्पः ऋषिः तथा सार्पराज्ञी १०.१८९ सूक्ते ऋषिः दृश्यते। एतेषां नीचयोनीनामृषित्वाङ्गीकारः तत्कालीनसामाजिकपरिवर्तनस्य सूचको भवति। तथा गोपथब्राह्मणे[११] १.२.८ मन्त्रे नीचयोनिः गुङ्गुः नाम सप्तर्षिषु उल्लिखितः। अयं विषय : Tradition of seven Ṛṣis इत्याख्यग्रन्थे[२] John Mitchner इत्याख्येनापि उल्लिखितः। किञ्चायमेव लेखकः ऋग्वेदे १०.४.८ मन्त्रे गुङ्गुशब्दः नीचयोनिषु प्रयुक्त इति अभिप्रैति। परन्तु स एव लेखकः 'गुङ्गुशब्दः आशी-अत्रिशब्दपर्यायः तत्स्थाने प्रयुक्तो वा भवेत्'' इत्यपि वदन् एतस्याः निगूढस्थितेः बहिरागन्तुं च प्रयतते (पृ. ७)।

ऋग्वेदे नीचयोनीनाम् ऋषीणां सत्ता तावत् सर्वथा अपरिगणितैव पूर्वैर्विद्वद्भिः। यद्यपि ऋग्वेदे सार्धत्रिशतात् (३५०) अप्यधिकाः ऋषयः सन्ति तथापि तेषां विषये यः कोऽपि समुचितां दृष्टिं न प्रादादिति खेदावहोऽयं विषयः। एतादृशेषु ऋषिषु अनेकेषां वृत्ति-कर्म-वेदशाखादिसबन्धविषयिण्यः सूचनाः तेषां नामभिर्लभ्यन्ते। यथा १०.९७, १२० सूक्तयोः ऋषेः आथर्वणस्य नाम्ना।

## ऋषीणां विषये अवज्ञा

ऋषीणां विषये या अवज्ञा यच्च अन्याय्यमाचरितं तत्प्रकटीभवति केषांचन अतिप्रसिद्धसूक्तानां द्रष्टृविषये। पुरुषसूक्तस्य (१०.९०) ऋषिः नारायणः एतेषु अन्यतमः, यस्सर्वथा अवगणितः परन्तु सूक्तं तत् सर्वप्रसिद्धम्। एवं १.१६४ सूक्तमप्याश्चर्यकरम्। तत्र सूक्तस्य विषये वा दृष्टृविषये नैव ज्ञायते, नासदीयसूक्तवत् पुरुषसूक्तवच्च। इदं १.१६४ सूक्तं तु दीर्घतमसा औचथ्येन दृष्टम्। परन्तु नास्त्यस्य नाम। तथा अनेकाः देवताः उल्लिखिता देवतात्वेन (विश्वेदेवाः, वाक्, आपः इत्यादयः), यद्यपि तत्रैव ४६ मन्त्रे इन्द्र-मित्र-यम-मातरिश्वनः उल्लिख्य ''एकं

सत् विप्रा बहुधा वदन्ति'' इत्येवं बहुप्रसिद्धं वाक्यमप्युपलभ्यते।

एवं तस्मिन्नेव सूक्ते २० मन्त्रे प्रसिद्धं ''द्वा सुपर्णा सयुजा सखाया'' इति वाक्यमुपलभ्यते, यच्च अनन्तरमुपनिषत्स्वपि उपलभ्यते, प्रायः उपनिषस्थत्वेनैव ज्ञायते च। एवं तस्मिन्नेव सूक्ते ४५ मन्त्रे वाचः चत्वारि पदानि वर्णितानि, येषु च मध्ये त्रीणि केवलम् ऋषिगोचराणि (गुहा त्रीणि निहिता), अन्यच्चैकमेव पदं मनुष्यगोचरमिति च वर्ण्यते (तुरीयं वाचो मनुष्या वदन्ति)।

एवमस्मिन्नेव सूक्ते ऋषिः 'संवत्सरकालचक्रमधिकृत्य ब्रूते, पृच्छति च (३४) ''पृच्छामि यत्र भुवनस्य नाभिः'' इति। स एवोत्तरयति ''अयं यज्ञो भवनस्य नाभिः'' इति (३५)। इदमुत्तरं तावत् वैदिककल्पनानुगुणं सदपि वस्तुतः अतिगूढार्थकं समुचितरीत्या औपम्यगर्भया वा रीत्या अर्थवर्णनं विना अस्मादृशानामर्थहीनमेव दृश्यते। न त्वस्य मीमासंकरीत्या केवलं प्रतीयमानोऽर्थः युज्यते।

किञ्चायं नाभिरूपः यज्ञः न मीमासंकयज्ञः अपि तु ऋषिणैव ''यस्तन्न वेद किमृचा करिष्यति' इति (मन्त्रः ३९), ''ऋचो अक्षरे परमे व्योमन्'' इति चोक्तरीत्या अनन्तरकाले प्रचलितं अक्षरं ब्रह्मैव स्यात्।

### ऋग्वेदीयर्षीणां संदेहधारा

किञ्चात्र अनेकेषु अन्वयासंबद्धर्षिदृष्टसूक्तेषु आश्चर्य-प्रश्न-सन्देहादिकं बहुना प्रमाणेन दृश्यते। यत्र कस्मिंश्चित् ''अदृष्टे'' श्रद्धया साकमेव संदेहधारापि अन्तः प्रवहमानेव दृश्यते, यच्च अदृष्टं सर्वस्यास्य जगतः मूलमिव अनुभूयते, यस्य च सत्त्वे असत्त्वे अज्ञातत्वे वा अन्योऽपि तत्सत्तामनुभवति, यदीयभागमिव भागग्राहिणमिव च आत्मानं मन्यते।

तदिदं च न केवलिनः केवलता, नापि अद्वैतिनामिव ससंर्गलेशविधुरता, अपि तु ''सहितता' एव सर्वेण प्राणिमात्रेण, ऋग्वेदस्यान्तिमे सूक्ते (१०.१९१) ''सं गच्छध्वं सं वदध्वम्' इति। तदिदमेव ''संज्ञानम्'' इत्युच्यते, यच्च अनुभवस्वरूपम् इतरैः साकमेव स्वस्यापि भवति। ज्ञानपदं च १०.७। सूक्तप्रकाशितालोके द्रष्टव्यम्, यत्र ज्ञानमेव देवतात्वेनोपदिष्टम्, यत्र च ज्ञानं वाचा, वाक् च जीवता अनुभवेन संबध्यमानमिव संलक्ष्यते, यश्च जीवन् अनुभवः अन्तर्निहितं तत्त्वं प्रकाशयितुं समर्थः इत्युच्यते ''प्रेणा तदेषां निहितं गुहाविः'' इति (१०.७१.१)।

अयं च संबन्धः १०.१९० सूक्तेऽपि प्रतिपाद्यते। तत्र बाह्यजगति वर्तमानं सत्यम् ऋतशब्देन, अन्तर्निहितं च सत्यं सत्यशब्देनाभिधाय तयोः संबन्धः प्रतिपादितः। तत्र ऋतसत्ययोर्द्वयोरपि अर्धप्रावृतता संवर्ण्यते।

## ऋग्वेदस्य पौरुषेयता

ऋग्वेदोऽयं नैकस्य ऋषेः कृतिः, अपि तु कल्पनातिक्रान्तेन कालेन बहुभिः ऋषिभिः दृष्टानां मन्त्राणां संग्रह एव। एते च मन्त्राः कालगर्भे अनेकप्रकाराख्यायिकासु वा अन्यथा वा अनेकप्रकारकसंदर्भपरिस्थित्यादिषु वा लीनाः यथावज्ज्ञातुमशक्याः, यच्च ज्ञातुं भाषा-ध्यानप्रातिभ- सांभविकप्रयत्नाः सर्वेऽपि अर्थप्राया एव भवन्ति। तदित्थं तेषां मन्त्राणां तावदेकः सारभूतः प्रतिपाद्यार्थः नैव वक्तुं शक्यते। न केवलमेतावत्, अपि तु मास्तु समग्रस्य ऋग्वेदस्य तावत् आहत्य एकार्थता, प्रत्येकसूक्तान्तर्गतेष्वपि मन्त्रेषु न संहतार्थता प्रतीयते इत्येतत् प्रयत्नेनैव विस्मर्तव्यं भवेत्। एतदर्थज्ञाने च न नैरुक्तप्रक्रिया, नापि वैयाकरणप्रक्रिया, न वा ऐतिहासिकी, आहोस्वित् यज्ञिकी प्रक्रिया, याः यास्केन वर्णिताः, समर्थाः भवन्ति। नापि बृहद्देवतायां प्रतिपादिता औपमानिकी प्रक्रिया उपयुज्यते, यथा प्रतिपादितं Lanrie L Patton कृते ग्रन्थे।[३]

## ऋषि-देवता-सूक्त-मन्त्राणां स्वरूपम्

ऋग्वेदस्तावत् विज्ञैः पण्डितैः प्रतिपादितरीत्या द्विपञ्चाशदुत्तरपञ्च-शताधिकदशसहस्र (१०.५५२) मन्त्रात्मकः अष्टाविंशत्यधिकसहस्रसूक्तेषु (१०२८) संग्रथितः। किं च न कोऽपि मन्त्रः स्वतन्त्रतयोपात्तः, किन्तु सूक्तान्तर्गततयैव। सत्यं चेदं यत् सूक्तमेकं केवलमेकमन्त्रात्मकं चेदपि सूक्ततयैव परिगणितं यथा १.९९ सूक्ते दृश्यते। तथापि इदं न स्पष्टतया अद्यावधि ज्ञायते ''किं नाम सूक्तम्'' इति, ''तस्य च कः संबन्धः मन्त्रेण'' इति। अत्र चेदं प्रतीयते यत् यस्य कस्यापि एकसूक्तता न वा अर्थाधारेण, नापि तदन्तर्गत-प्रातिभानुभवाधारेण वा। अपि तु ऋषिं देवतां छन्दो वा अनुसृत्यैव। याश्च ऋषिच्छन्दोदेवताः वेदाधारस्तम्भत्वेन सर्वैः परिगण्यन्ते। परन्तु ''को वा ऋषिः ? ''का वा देवता''? इत्यंशोऽपि न स्पष्टः।

## ऋषिदेवतासांकर्यम्

अधिकं चेदमस्पष्टत्वं यत्र ऋषिदेवतयोरैक्यं भवति। यथा ७.३३ सूक्ते १-९ मन्त्रेषु वसिष्ठो मैत्रावरुणिः स्वपुत्रानेव देवतात्वेन भजते (ये च पुत्राः ९.९७ सूक्ते स्वयमेव ऋषयः) किं च त एव पुत्राः ७.३३ सूक्ते १०-१४ मन्त्रेषु ऋषयस्सन्तः वसिष्ठमेव देवतात्वेन भजन्ते। सत्यमेतद्यद्यपि ७.३३ सूक्ते १-९ मन्त्रेषु ''वसिष्ठपुत्रा इन्द्रो वा'' इति देवतोल्लेखो दृश्यते इति, परन्तु १०-१४ मन्त्रेषु वसिष्ठ एव देवता भवति। किं च गाथिनो विश्वामित्रः ३.२६ सूक्ते ऋषिः, परन्तु तस्मिन्नेव सूक्ते ९ मन्त्रे विश्वामित्रोपाध्यायः देवतात्वेनोल्लिखितः। तथा ४. १८ सूक्तस्य ऋषिः वामदेवो गौतमः एव ७ मन्त्रे देवता भवति।

एतानि तु केवलं कतिपयोदाहरणानि। वस्तुतः बहुत्र एतादृशमुपलभ्यते यत्र ऋषिः स्वमेव स्तुवन् ऋषिर्देवता च भवति, तादृशस्थलेषु ऋषि-देवतयोः-स्वरूपभेदः नामभेदो वा नैव सुस्पष्टो भवति।

इयं च समस्या संवादसूक्तेषु अधिकतया प्रतीयते, यत्र एक एव यदा संबोध्यते तदा देवता, यदा च संबोधयति तदा ऋषिश्च भवति। विश्वामित्रनदीसंवादः (३.३३), पुरूरवऊर्वशीसंवादः (१०.९५), यम-यमी संवादः (१०.१०) भावयव्य-रोमशासंवादः (१.१२६) इत्यादयः तादृशाः प्रसिद्धाः।

संवादसूक्तेषु ऋषिदेवतयोरैक्यमिव क्वचिदन्यत्रापि यत्र यजमानः स्वयमेव देवता भवति तत्रापि ऋषिदेवताभेदः अत्यन्तं संदिग्धो भवति, यश्च संदेहः अस्मन्मनसि प्ररूढमूलम् ऋषिदेवताभेदं समूलं नाशयन्निव दृश्यते। किं बहुना, ऋग्वेदे अनेकत्र उलूखलमुसले देवतात्वेन परिगणिते यथा १.२८ सूक्ते। निरुक्ते दत्ता देवतासूची चोपोद्वलयति संदेहमेनं यत्र अश्व-मण्डूक-अक्ष-रथ-इषु-धनुरादयः देवतात्वेन निर्दिष्टाः। अत्रासक्ताः ६.७५ सूक्ते अनेकायुधानि देवतात्वेनोदाहृतानि द्रष्टुं शक्ष्यन्ति।

यदर्थे वयमद्य ऋषि-देवताशब्दौ प्रयुञ्ज्महे, सोऽर्थः ऋग्वेदकाले अभिप्रेतो नासीदिति प्रतीयते, यदि वयं सूक्ष्मं पश्यामः।

### छन्दःसमीक्षा

किञ्च यद्बद्ध एव मन्त्रः भवति, तादृशं छन्दः अपि सर्वादृतां वेदानामपौरुषेयत्वकल्पनां न पुष्णाति। यदि मन्त्राः ऋषिभिर्दृष्टाः, न तु तैर्विरचिताः, ऋषयश्च मन्त्रद्रष्टार एव, न तु तद्विरचयितारः, कथं तर्हि अनेकेषु सूक्तेषु सर्वे मन्त्राः एकस्मिन्नेव छन्दसि भवेयुः? पूर्वोपलब्धच्छन्दसां परिवर्तनेन किञ्चिन्नूतनच्छन्दसां वा सर्वथा नूतनानां छन्दसां वा कथमाविर्भावः युज्यते? यथा ऋग्वेदे न केवलमेका गायत्री, अपि तु अनेकविधाः गायत्र्यः दृश्यन्ते, याश्च ऋषीणां प्रतिभां नूतनाविष्कारशक्तिं च समर्थयन्ति। ऋषयश्च पूर्वतनानामृचां छन्दस्सु परिवर्धनादिकमकुर्वन्नित्यनेन ज्ञायते। यथा १.३०, ८.११, ८.६८, ९.१०८, १०.९ सूक्तेषु विद्यमानाः पादनिचृद् गायत्री प्रतिष्ठा गायत्री, वर्धमाना गायत्री, अनुष्टुम्मुखः प्रगाथः (अनुष्टुप्-गायत्र्यौ), तथा यवमध्या गायत्री इत्यादयः अत्र प्रमाणम्।

यद्यपि पण्डितदामोदरशर्मा एतानि छन्दांसि न परिगणयाञ्चक्रे, तथापि स्वकीयायाम् ऋग्वैदिकछन्दस्सूच्यां द्विपदां गायत्रीं सस्मार।[४]

किं च तदीयसंस्करणे ७६८ पृष्ठे मुद्रिता सूची न संपूर्णा, अपि तु ८३०-८३४ पृष्ठेषु मुद्रितैव। इयमुत्तरा सूची तु सर्वाणि वैदिकच्छन्दांसि १) गायत्री २) उष्णिक् ३) अनुष्टुप् ४) बृहती ५) पङ्क्तिः ६) त्रिष्टुप् ७) जगती ८) प्रगाथः ९) संकीर्ण इत्याख्यच्छन्दोभ्य एव समुत्पन्नानि इति सूचयतीव दृश्यते। परन्तु सूचीयं दोषभागिव प्रतीयते, यतः १०.६ त्रिष्टुपः अनन्तरं ७, ८, ९ किमिति न प्रतीयते।

परमत्रापि क्लेशो वरीवर्त्येव, यतः प्राचीनछन्दोभ्य एव नूतनानामुत्पत्तिरिति चेत् "का नूतनोत्पत्तिक्रिया? नूतनं च किम्?" इति प्रश्नः अपौरुषेयत्वपृष्ठभूमौ समुज्जृम्भते। यथा पिपीलिकामध्या हि (१०.१०५.२.७) उष्णिक् अनुष्टुप्-बृहतीनां परिणामरूपतया वर्ण्यते, परन्तु कथमस्य परिणामेन संबन्ध इति न ज्ञायते। तथा द्विपदा गायत्री या ७६८ पृष्ठे समुल्लिखिता, अस्यां सूच्यां नास्त्येव। यद्यपि त्रिपदा गायत्री अत्र ८३० पृष्ठे वर्तते, परन्तु न मुख्यसूच्यां, किन्तु अमुख्यसूच्यामेव।

**नूतनच्छन्दसामाविर्भावः**

किञ्चायं प्रश्नः सातवलेकरदामोदरशर्मणः छन्दोविषयकचिन्तनमात्रसंबन्धी न। किन्तु साक्षात् ऋषिछन्दसोरेव सम्बन्धी, यः ऋषिः यत् छन्दः यथा पश्यति, सः तत् इच्छति चेत् तथा स्वकीयकार्ये तदुपयुङ्क्ते। अन्यथा चिन्तयति चेत् तत् परिवर्तयेत्, अथवा नूतनमेव छन्दः अन्विष्येत्, एकस्मिन्नेव सूक्ते नानाछन्दांसि उपयुञ्ज्यात् वा।

यथा कक्षीवान् दैर्घतमस औशिजः १.१२० सूक्ते एकस्मिन्नेव नव छन्दांसि उपायुङ्क्त। तत्र च कानिचन नूतनान्यपि। यथा ककुप्, का-विराट्, नष्टरूपी, तनुशिरा, विष्टार-बृहती, कृतिः इति। ऋषिः स्वकीयमन्त्रेषु एतादृशनानाच्छन्दसाम् उपयोगविषये सर्वथा उदासीन एव इति तु विश्वसितुमशक्यमेव।

अत एव, कारुः यथा स्वकर्मणि उद्युक्तः नूतनवस्तुनिर्माणे ज्ञानपूर्वकमेव प्रवर्तते तथा ऋषिरपि ज्ञानपूर्वकमेव प्रवर्तते इत्येव चिन्तयितुं युक्तम्। तथा हि ९. ११२ सूक्तस्य ऋषिस्तावत् स्वयमेवोद्घोषयति "कारुरहम्" "मम पिता भिषक्" "मम माता उपलप्रक्षिणी" इत्यादि। १०.९७ सूक्तस्य ऋषिस्तु आथर्वणो भिषगेव, देवता तु ओषधयः।

**ऋग्वेदीयः सूक्तक्रमः**

तदित्थं प्रायः ३५० संख्याकाः ऋषिसंज्ञकाः कारवः नानाच्छन्दस्सु नानाविधान् मन्त्रान् विरचमायासुः। तांश्च मन्त्रान् व्यासाख्यः विद्वान् तादृशमन्त्रविद्भ्यः अनेकेभ्यः

पुरुषेभ्यः सकाशात् संगृह्य अनन्तरमेकेन सूक्तमण्डलादिरूपेण क्रमेण संग्रथयामास। स च क्रमः केवलं तात्कालिकतया एव कल्पितः आसीत्, कालान्तरे च पुनर्नूतनमन्त्राणां यथा यथा उपलब्धिः तथा तथा पुनर्योजनं क्रमान्तरेण च कृतम्। परन्तु केनचित् कारणेन कस्मिंश्चित् काले पुनः संग्रथनं स्थगितं, यतः नूतनमन्त्राणां न ग्रथनं करणीयमिति वा, तावत्पर्यन्तमुपलब्धमन्त्राणामेव संरक्षणं बहुप्रयत्नसाध्यमिति वा चिन्तितम्। अत एव तावत्पर्यन्तमुपलब्धमन्त्राणामेव संरक्षणार्थमनेके उपायाः आविष्कृताः, केचन पुरुषाश्च तादृशमन्त्राणां संरक्षणमेव जीविकां कृत्वा अहर्निशं पद-क्रमजटादिपाठक्रमेण मन्त्रसंरक्षणमकार्षुः यादृशपदपाठादिक्रमं विना मन्त्रासंरक्षणं सर्वथा नैव समभविष्यत्। त एते मन्त्रसंरक्षकास्तु ''मन्त्रसंप्रदायस्य किमर्थं संरक्षणम्, को वा मन्त्राणामर्थः'' इत्यादिविचारं विनैव केवल तान्त्रिकाः (Technologists) भूत्वा तत्संरक्षणं व्यधुः। तेषां मनसि ''मन्त्राणां संरक्षणं किमर्थम्? तेषां क्रमः साधुः न वा? को वा मन्त्राणामर्थः''? इत्यादिप्रश्नाः नैव प्रादुरभवन्। अत एव ते प्रपञ्चे एव आद्यग्रन्थपालकाः इत्यपि अभिख्यां भजन्ते। सर्वथा अस्मदीयदेशे बहुधा सामाजिकराजनीतिकपरिवर्तनानां मध्येऽपि तैः मन्त्रपाठकैः इदमसंभवप्रायं कार्यं कृतमिति नूनं प्रशंसनीयास्ते।

भारतीयसंस्कृतेः आद्यकाले यैः सामाजिकपरिवर्तनानि संलक्षितानि तैः अपि मन्त्राणां संरक्षणादिविषये नैव दृष्टिः प्रदत्ता।

येऽपि वेदानाम् अर्थावगतौ अर्थाविष्करणे वा प्रवृत्ताः तैरपि वेदाः भागश एव दृष्टाः, न तु पूर्णशः। व्याख्याप्रयत्नास्तु अत्यन्तमादिमकाले एव द्विधा विभक्ता आसन् यथा ब्राह्मणग्रन्थेषु दृश्यन्ते, १. केवलं यज्ञकेन्द्रितव्याख्यापक्षीयाः केचन, २. अपरे तु एतानि वाक्यानि सांकेतिकानि अन्तर्गर्भबह्वर्थानीति वादिनः इति। सांकेतिकत्ववादिनामपि प्रात्यक्षिकपथेन वेदार्थान्वेषिणः बहवः आसन्। यतः नैघण्टुकप्रक्रिया वैयाकरणप्रक्रिया ऐतिहासिकी वा प्रात्यक्षिकपथात् प्रच्युता नैव भवति।

सांकेतिकत्ववादेऽपि प्रात्यक्षिकपथभिन्नेन पथा वेदार्थान्वेषणं ब्राह्मणग्रन्थेषु, विशिष्य आरण्यकग्रन्थेषु च दृश्यते। उपनिषदस्तु सांकेतिकत्ववादस्य चरमसीमाभूताः प्रात्यक्षिकपथभिन्नपथेन वेदार्थज्ञानायोपकुर्वन्ति।

परन्तु द्वावप्येतौ पन्थानौ अत्यन्तं विस्मयावहया ऊहितुमप्यशक्यया रीत्या संरक्षितायाः 'वेदमन्त्राणामानुपूर्व्याः तदीयक्रमस्य च विषये सर्वथा मुक्तीभूतावेव तिष्ठतः।

इदानीं वाचा परम्परया संरक्षितः वेदसूक्तक्रमः तावत् सर्वथा अङ्गीकरणीय एव, यतोऽत्र तं क्रमं विना अन्यः कोऽपि आनुपूर्वीविशेषः अद्य यावन्नोपलभ्यते। परन्तु सः क्रमः ऋग्वेदस्य लेखनप्रारम्भादनन्तरमपि तथैव प्रचलित इत्यंशस्तु विवरितुमशक्य एव। ऋग्वेदस्य सर्वप्रथमा मातृका तु १००० क्रैस्तवर्षीया काश्मीरेषु उपलभ्यते। पञ्चदशशताब्दीयं सायणीयभाष्यमपि लेखनाधारितमेवासीत्। अधुना प्रायः द्विशतं वर्षेभ्यः ऋग्वेदस्य मुद्रितपुस्तकान्युपलभ्यन्ते। तथापि पण्डितसातवलेकरो वा पण्डितदाण्डेकरो वा अथवा अन्येऽपि वरीयांसः वेदविदः ऋग्वेदस्य मन्त्राणां सूक्तानां च पुनस्सन्निवेशे प्रयत्नं न व्यधुरिति खेदावहमेव।

तमेतं सर्वथा अनर्हम् अन्यायं समीकर्तुमिह वयं जयपुरीये ऋग्वेदीयसंस्करणे प्रायतामहि। परन्तु पाठकः विद्वान् स्वयमेव परीक्षितुं शक्नोति यत्कर्तुं वयमुद्यताः तत्कृतं न वेति। यद्यपि पण्डितसातवलेकरः स्वकीये ऋग्वेदसंस्करणे ऋषिसूच्यां कार्यमिदं कर्तव्यमिति नूनं जानन्नपि, नात्र कार्ये पूर्णतया प्रायतत। प्रायः यः संकोचः पूर्वान् ऋषि–देवता–छन्दोऽनुक्रमणीकारान् अबाधत, तेनैव संकोचेन अयमपि अग्रासिष्ट, यश्च संकोचः, ''अज्ञातकालादारभ्य अज्ञातकालपर्यन्तं वेदाः अनेनैव क्रमेण पठिताः पठनीयाश्च, नात्र क्रमभङ्ग कार्यः'' इति नियमेन उत्पन्न आसीत्।

परन्तु नायं नियमः सार्वकालिकः यस्मिन् काले तेनैव क्रमो वेदानां संरक्षणं करणीयमासीत्, स च कालः व्यपगतः। अधुना च सर्वथा अतीते तस्मिन् काले स नियमोऽपि त्यक्तुं शक्यः। यस्मिन् काले वेदानां न्याय्यम् आचरणीयं तस्मिन् अपि काले पूर्वतननियमबद्धाः सन्तः वयं वेदान् न विमोक्ष्यामश्चेत् तदेव अस्माकं बन्धनं भवति यस्माच्च सर्वथा वयं विमोच्याः।

तदित्थम् ऋग्वेदं प्राचीनबन्धनात् विमुच्य तस्य तात्कालिकपरिस्थित्युत्थात्, तात्कालिकात्, तात्कालित्वेन तत्क्रमकर्तृभिरप्यवबुद्धात् क्रमात् मोचनार्थं प्रयत्नः विदुषां पुरस्तादुपस्थापितः, यस्य च साफल्ये स्वयं विद्वांसः प्रमाणायन्ते।

---

१. ''गुङ्ङ्ु गुङ्ङ्ुवासे तपति'' इति गोपथब्राह्मणे (गोपथब्राह्मणम्, विजयपालविद्यावारिधिना संपादितम्, सावित्रीदेवीबगेरियान्यासेन प्रकाशितम्, कलकत्ता १९८०. पृ. २८)। यद्यपि तत्र सप्तर्षिपरिगणना कापि नास्ति, तथापि पूर्वोक्तलेखकः तत्संभावनया एवं चिन्तयामासेति संभाव्यते। परन्तु तत्र अनेकविधतपस्तप्तवतां कतिपयर्षीणामुल्लेखो विद्यते। तथा विश्वामित्रजमदग्नेरपि उल्लेखो वर्तते परन्तु तयोरैक्यं न वेति विषये नास्ति विनिगमना। तथा ऋग्वेदेऽप्येकः जमदग्निविश्वामित्रो वर्तते, स च ९,१०७ सूक्ते सप्तर्षिषु एकत्वेन परिगणितात् जमदग्निर्भार्गवाद्भिन्नः इति संभाव्यते।

२. मोतीलाल बनारसीदाससंस्थया, प्रकाशितः, देहली, २०००, पृ. ७

३. Walter de Gruyter, Berlin, New York, Ō

४. ऋग्वेदसंहितायाः चतुर्थं संस्करणं, स्वाध्यायमण्डलम्, पारडी, गुजरातराज्यम् पृ. ७६८

# तिथिनिर्णयः

वासुदेव शर्मा

धार्मिकसिद्धान्तैर्व्यापृते भारतीयजीवने श्रौतस्मार्तकर्माणि सम्पादयितुं वेदाङ्गज्यौतिषशास्त्रगणितजन्यानां संवत्सराय-नर्तुमासपक्षतिथियोगकरणादीनां ज्ञानं सर्वेषामावश्यकम्। तत्र तिथिनिर्णयोऽत्र विचार्यते। नित्यनैमित्तिककार्येषु धार्मिकानुष्ठानेषु च धर्मशास्त्रानुसारेण तिथिनिर्णयो भवति। तिथिभिः सह अमृतस्रावस्यास्ति सम्बन्धः। यदि तिथिनिर्णयः शुद्धोऽस्ति तर्हि तस्यां तिथौ भाव्यमृतस्त्रावः इष्टापूर्तस्य साफल्यं विधास्यति। अत एव प्राचीनगणितज्ञैः तिथिनिर्णयाय सूक्ष्मगणितस्याश्रयो व्यधायि। एवं तिथिनिर्णये गणितवेधयोरैक्यमावश्यकमिति चास्मिन् प्रबन्धे प्रतिपादयति लेखकः।

अस्मिन् पवित्रतमे भारतवर्षे बहुपुण्यप्राप्तं मनुष्यजन्म धृत्वा संसारेऽस्मिन् विविधदुःखानां विकटजालबन्धनान्मोक्तुं सुखपरम्परां प्राप्य अन्ते निरतिशय-सुखानन्दस्वरूपमोक्षप्राप्त्यर्थम् अस्माकम्परमकरुणासिन्धुभिः कामक्रोधाद्यधःपतनकार-कासुरीसम्पत्तिविरहितैः शान्तस्वरूपैः शमदमादिसाधनसम्पन्नैः महर्षिभिः मानव-समाजस्य हितार्थं पुरुषार्थचतुष्टयसिद्धावपि प्रथमतो धर्मसिद्धिरेव मुख्येति मत्वा धर्मस्यैव प्रतिपादनं कृत्वा तद्द्वारैव अन्तिमसिद्धिर्भवतीति निश्चितम्।

अत एवास्माकं प्राचीनैः ऋषिभिः महर्षिभिः लोककल्याणार्थं धर्मप्रक्रियां बोधयितुम् अनेकधर्मशास्त्राणां रचना कृता। तस्याश्च धर्मशास्त्ररचनायाः वेदमूलकत्वात् तदङ्गीभूतज्योतिषशास्त्रसिद्धां कालविशिष्टगणनां कृत्वा तदनुसारेणापि धर्मप्रतिपादनं कृत्वा जनकल्याणार्थमादर्शरूपः एकः कालविधानमार्गः प्रदर्शितः, यमनुसृत्य पञ्चाङ्गनिर्माणस्यैका परम्परा प्रारब्धा।

धार्मिकसिद्धान्तैर्व्यापृतेऽस्मिन् भारतीयजनसमुदाये तेषां जीवने च वेदवेदाङ्ग-धर्मशास्त्रपुराणादिप्रवर्तितधार्मिककृत्यानां, यज्ञोत्सवानां, नित्यनैमित्तिक-प्रायश्चित्ताद्य-

नुष्ठानानां, श्रौतस्मार्तकर्मणां, महत्त्वमत्यधिकं वरीवर्त्ति। एतत्सर्वं सम्पादयितुं वेदाङ्गीभूतज्यौतिषशास्त्रगणितजन्यानां संवत्सरायनर्तुमासपक्षतिथियोग-करणादीनां ज्ञानप्राप्तिः सर्वेषां कृते आवश्यकम्, एतदखिलं शुद्धगणितीयवेधपक्ष-सिद्धपञ्चाङ्गेनैव ज्ञातुं पार्यते। पञ्चाङ्गेषु पञ्च अङ्गान्येव प्रमुखानि, तानि सन्ति –

**तिथिः वारश्च नक्षत्रं योगः करणमेव च ।**
**पञ्चाङ्गमिति प्रोक्तं ज्योतिर्विद्याविचक्षणैः ॥**

अत्र वयं केवलं तिथिविषये एव ज्यौतिषशास्त्रदृष्ट्या विचारं कुर्मः, अतः ''**तिथिनिर्णयः**'' इति विषयमवलम्ब्यैव किञ्चिदत्र निरूप्यते – तत्र का नाम ''**तिथिः**'' – तनोति विस्तारयति वर्धमानस्य क्षीयमाणस्य वा चन्द्रमसः एकां कलां अर्थात् यः कालविशेषः सा तिथिरिति श्रुतिस्मृतिपुराणैः प्रतिपादितः तिथि-शब्दस्यार्थः। तन्यते कलया यस्मात्तस्मात्ताः तिथयः स्मृताः। पुराणेष्वपि निर्दिष्टम्[१] –

**अमा षोडशभागेन देवि प्रोक्ता महाकला।**
**संस्थिता परमा माया देहिनां देहधारिणी।।**
**अमादिपौर्णमास्यन्ताः याः एव शशिनः कलाः।**
**तिथयः ताः समाख्याताः षोडशैव वरानने:।।** (स्कन्दपुराणे)

नित्यनैमित्तिककार्येषु धार्मिकानुष्ठानेषु च धर्मशास्त्रानुसारं तिथिनिर्णयः क्रियते। श्रुतीनां वचनमस्ति यत् तिथिभिः सह अमृतस्रावस्यास्ति सम्बन्धः, यदि तिथिनिर्णयः शुद्धोऽस्ति तदा तस्यां तिथौ भावी अमृतस्रावः इष्टापूर्तस्य साफल्यं विधास्यति, अत एव प्राचीनगणितज्ञैः तिथिनिर्णयार्थं सूक्ष्मगणितस्याश्रयो गृहीतः। तिथीनां सूक्ष्मत्वसन्दर्भे महत्त्वप्रतिपादने च गणितवेधयोः ऐक्यमावश्यकम्। **वशिष्ठस्य** वचनमस्ति[२] –

**यस्मिन् पक्षे यत्र काले येन दृग्गणितैक्यकम्।**
**दृश्यते तेन पक्षेण कुर्यात्तिथ्यादिनिर्णयम्।।**

**भास्कराचार्याः सिद्धान्तशिरोमणौ** कथयन्ति[३] –

**यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम्।**
**स्यात्प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या।।**

**मरीचिटीकाकारस्याभिमतमस्ति**[४] –

''**वेधज्ञातग्रह-गणितागतग्रहयोरैक्यमभेदः**'' एतदेव दृग्गणितैक्यकम्।

**तिथिचिन्तामणौ तिथिविषये स्पष्टोल्लेखः**[५] –

**तेभ्यः स्याद् ग्रहणादिदृक्सममियम् प्रोक्ता मया सा तिथिः।**
**ग्राह्या मङ्गलधर्मनिर्णयविधावेषा यतो दृक्समा।।**

**सूर्यसिद्धान्तेऽप्युक्तम्**[६] -

> **तत्तद्गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः।**
> **प्रयान्ति तत्प्रवक्ष्यामि स्फुटीकरणमादरात्।।**

ज्यौतिषशास्त्रानुसारं तिथिनिर्णये अमावास्यायाः ग्रहणं सुगमम्, यतो हि इयमेव अन्तिमा तिथिः। अमरकोषकारः अमायां एव सूर्यचन्द्रयोः संगमं कथयति **''दर्शः सूर्येन्दुसंगमः''**। अत्र सूर्यचन्द्रयोः संगमः अस्य शब्दस्य अर्थो भवति सूर्याधिकरण-राश्यवयवविशेषेषु चन्द्रस्य स्थितिः। इदमेव अमायाः लक्षणं। अत्र विचारयन्तु भवन्तः सूर्यस्य कक्षा पृथक् चन्द्रस्य कक्षा च पृथक् ,अस्यां स्थितौ सूर्यचन्द्रयोः संगमः असम्भवः। अत्र अमायां सूर्यचन्द्रयोः मेलनम् एकराश्यवयवविशेषेषु जायमानः अवच्छेद्या-वच्छेदकभावोऽस्ति। एतदेव समसूत्रपातनाम्ना कथ्यते। श्रीरघुनन्दनभट्टाचार्याः तिथितत्त्वे[७] प्रतिपादयन्ति -

**''सूर्याच्चन्द्रमसोर्यः परः सन्निकर्षः सा अमावास्या'' इति। ''उपर्यधोभावापन्नसमसूत्रपातन्यायेन राशौ एकांशावच्छेदेन सहावस्थानरूपः सम्बन्धः संगमो वा''** अमान्तस्य लक्षणं। यदीयम् परिभाषा याथातथ्येन स्वीक्रियते चेत् तर्हि प्रत्येकामावास्यायां सूर्यग्रहणं दृश्यं भवेत् तत्तु न भवति, फलतः इदमेवानुमीयते यत् चन्द्रः क्रान्तिमण्डलकक्षासम्पातात् अन्यत्र स्वकक्षायामवस्थितः, परन्तु ग्रहणे न जातेऽपि अमावस्यायाः मान्यता तु भविष्यत्येव, यतो हि ध्रुवप्रोतवृत्ताधारेण सूर्यचन्द्रचिह्नयोः पूर्वापरम् अन्तरं क्रान्तिवृत्ते नास्ति। अत्रेदं विचारणीयं यत् पूर्वापरान्तराभावे कश्चन्द्रः एकराश्यन्तर्गतावयवेषु सन्निकर्षं करोति। ध्रुवप्रोतवृत्तं चन्द्रमण्डलं संस्पर्शयन् क्रान्तिवृत्ते यत्र लगति तत्रैव चन्द्रः कल्प्यते। तस्यैव कल्पितचन्द्रस्य एकराशौ सन्निकर्षो भवति। अस्यां स्थितौ अमा तु भवति परन्तु ग्रहणं न भवति। अत्र तिथिनिर्धारणार्थं तिथीनां प्रारम्भबिन्दुरेव अमान्तपदवाच्यम्। इदमेव तिथ्यन्तसूचकमपि वक्तुं शक्यते। सिद्धान्तशिरोमणौ स्पष्टाधिकारे संक्रान्तिप्रकरणे मरीचिटीकाकारः कथयति[८] -

**''ग्रहबिम्बकेन्द्रस्थराश्यादिस्थानसंयोगत्वम् संक्रान्तित्वम्, तत्र सूर्यस्य क्रान्तिवृत्ते भ्रमणात् सूर्यसंक्रान्तिर्मुख्या चन्द्रादीनान्तु शराग्रे स्थितत्वात् क्रान्तिवृत्तस्थराश्यादिस्थचिह्नयोरभेदेऽपि चन्द्रमण्डलाद्यधिष्ठानाभावात् चन्द्रादिचिह्नात् क्रान्तिवृत्ते तन्मण्डलम् कल्पितम्, तस्य स्ववास्तवमण्डलानुरोधेन चलत्वात्, अत एव तत्संक्रान्तिः अमुख्या वचनबलादिति।''**

इत्थं तिथिनिर्णयार्थं विचारणीयाममान्तबिन्दोः लक्षणं भवति - वास्तविकस्याथवा कल्पितचन्द्रस्य सूर्याधिकरणैकराश्यवयवविशेषेण सह समसूत्रसदृश- संयोगत्वमेव अमायाः लक्षणं। **गोभिलः स्पष्टं कथयति**[९] -

**''यः परमो विप्रकर्षः सूर्याच्चन्द्रमसोः सा पौर्णमासी।**
**यः परः सन्निकर्षः सा अमावस्या''॥**

**भगवतीपुराणे कथितम्** [१०] **-**

**''कलाऽवशेषे निष्णातः प्रविष्टः सूर्यमण्डलम्।**
**अमायां विशते यस्मादमावास्या ततः स्मृताः॥''**

**मत्स्यपुराणेऽपि वचनमिदम् उपलभ्यते** [११]**-**

**''यदाश्रित्यताममावास्यां पश्यतः सुसमागतौ।**
**अन्योऽन्यं सूर्यचन्द्रौ तु यदा तद्दर्शमुच्यते॥''**

**तैत्तिरीयब्राह्मणे स्पष्टमुक्तम्** [१२] **-**

**''कलाप्रमाणं तु सोमात्, सूर्याच्चन्द्रान्तरेण कुर्यादिति च''**

(तैत्तिरीयब्राह्मणे १-५-२४)

**वेदेषु कलारूपा तिथिरेव वर्णिता** [१३]**-**

**''सुवर्णकोषं रजसा परीवृतं देवानां वसुधानीं विराजम्। अमृतस्य पूर्णां तां नु कलां विचक्षते। पादं षड्वोतुः न किला विवित्से।''**
(तैत्तिरीयारण्यके ३-११-२३)

ज्यौतिषशास्त्रानुसारम् **''तिथिनिर्णयः'** गणितेन तिथिसाधनविधिना निर्णीयते, अतः ज्यौतिषे सैद्धान्तिकमतेन तिथेः परिभाषा भवति - **चन्द्रकेन्द्रे नीयमानं कदम्ब-प्रोतवृत्तं यत्र क्रान्तिवृत्ते लगति तद्बिन्दुतः सूर्यकेन्द्रपर्यन्तम् क्रान्तिवृत्तीयचापखण्डं ''तिथिः''**। भोगांशाः क्रान्तिवृत्ते भवन्ति अतः तिथिः क्रान्तिवृत्तीया एव भवति। तस्याः साधनं गणितेन एवम् क्रियते [१४]-

**''अर्कोनचन्द्रलिप्तास्तु तिथयो भोगभाजिताः।**
**गताः गम्याश्च षष्टिघ्न्यो नाड्यो भुक्त्यन्तरोद्धृताः॥''**

**(सूर्यसिद्धान्ते, स्पष्टाधिकारः, श्लो. ६६)**

अत्र तिथिनिर्णयार्थं प्रथमं विज्ञेयं यत् अमान्तद्वयमध्यवर्ती कालः चान्द्रो मासः। एकस्मिंश्चान्द्रमासे त्रिंशत्तिथयः भवन्ति। त्रिंशत्तिथिषु रविचन्द्रयोरन्तरमानम् चक्रकलातुल्यं भवति। अतोऽनुपातः अत्र क्रियते - यदि त्रिंशत्तिथिभिः चक्रकलाः (२१६०० कलाः) लभ्यन्ते तर्हि एकतिथौ किमिति - $\frac{२१६०० \times १}{३०}$ = ७२० कलाः

विंशत्यधिकशतकलाः अर्थात् द्वादशांशाः = एकतिथिभोगमानम्, अनेन सिद्धं यत् सूर्यचन्द्रयोरन्तरकलाः यदा ७२० मिताः भवन्ति तदैका तिथिर्भवति। अत एव एकतिथिभोगप्रमाणविषये सूर्यसिद्धान्ते उक्तमस्ति – **"खश्विशैलास्तथा तिथेः"** अथाभीष्टसूर्यचन्द्रान्तरकलाभ्यो गततिथ्यानयनार्थमनुपातः यदि खश्विशैलतुल्याभिः (७२० कलाभिः) सूर्येन्द्वन्तरकलाभिः एका तिथिस्तदाभीष्टान्तरकलाभिः किमिति –

$$\frac{१ \times \text{सूर्यचन्द्रान्तरकलाः}}{७२०}$$ = अत्र लब्धिमिताः गतास्तिथयः शेषं वर्तमानतिथेर्भुक्तमानं कलात्मकम्।

तच्च तिथिभोगात्पतितं वर्तमानतिथेर्भोग्यमानं कलात्मकं स्यात्।

अनेन रवीन्दुगत्यन्तरानुपातेन भुक्तभोग्यघट्यानयनं तिथिभोगमाननिर्णये महत्त्वपूर्णमस्ति, तच्चैवं भवति –

यदि रवीन्दुगत्यन्तरकलाभिः षष्टिघटिकास्तदा तिथेर्भुक्तभोग्यकलाभिःकिमिति भुक्तवशाद् भुक्तघटिकाः, भोग्यवशाच्च भोग्यघटिकाः स्युः अनेन –

$$\frac{\text{गतकलाः} \times ६० \text{ घटिकाः}}{\text{रविचन्द्रगत्यन्तरकलाः}} = \text{गतघटिकाः}$$

$$\frac{\text{भोग्यकलाः} \times ६० \text{ घटिकाः}}{\text{रविचन्द्रगत्यन्तरकलाः}} = \text{भोग्यघटिकाः}$$

वेंकटेशबाबूकेतकरमहोदयेनापि तिथिनिर्णयार्थमेवमेव निर्दिष्टम् [१५] –

**"भक्ताः व्यर्कविधोर्लवाः यमकुभिर्याता तिथिः स्यात्फलम्।**
**शेषं यातमिदं हरात् प्रपतितं भोग्यं विलिप्तास्तयोः।**
**भुक्त्योरन्तरभाजिताच्च घटिकाः यातैष्यकाः स्युः क्रमात्।।"**

(केतकीग्रहगणितम्, स्पष्टाधिकारे, श्लो. ३५)

अनेन सिद्धान्तेन सूर्यचन्द्रयोः स्पष्टवशात्, रवीन्दुगत्यन्तरवशाच्च निर्णीता तिथिः एव धर्मकृत्योपयोगिनी भवति। एतच्चान्द्रदिनमप्युच्यते। इत्थमिदमवधेयं यत् चन्द्रार्कयोर्युतिकालात् (अमान्तात्) अन्ययुतिकालपर्यन्तम् अन्तरांशाःभांशः (३६०) मिताः भवन्ति। एतेंऽशाः त्रिंशत्तिथिभिर्भक्ताः भवन्ति। अतोऽमान्तादग्रे तयोः सूर्यचन्द्रयोः द्वादशांशान्तरं यावत् शुक्लप्रतिपत्तिथिः चतुर्विंशत्यंशं यावत् द्वितीया तिथिः षट्त्रिंशदंशं यावत् तृतीया तिथिः, (४८) अष्टचत्वारिंशदंशान्तरं यावत् चतुर्थी तिथिः, षष्टिभागान्तरं

(६०) यावत् पञ्चमी, द्विसप्तति (७२) भागान्तरं यावत् षष्ठी, चतुरशीति (८४) भागान्तरं यावत् सप्तमी, षड्नवत्यंशा (९६) न्तरं यावत् अष्टमी, अष्टोतरशतांशा (१०८) न्तरं यावत् नवमी, विंशोत्तरशतांशा (१२०) न्तरं यावत् दशमी, द्वात्रिंशदुत्तरशतां (१३२) शांन्तरं यावत् एकादशी तिथिः, चतुश्चत्वारिंशदुत्तरशतांशा (१४४) न्तरं यावत् द्वादशी तिथिः, षट्पञ्चाशदुत्तरशतांशा (१५६) न्तरं यावत् त्रयोदशी तिथिः, अष्टषष्ट्युत्तरशतांशा-(१६८) न्तरं यावत् शुक्लचतुर्दशीतिथिः, अतः परम् अशीत्यधिकशतांशा (१८०) न्तरं यावत् ''सूर्यचन्द्रयोः परः सन्निकर्षः तावत्'' पूर्णिमा पूर्यते। इत्थं ज्यौतिषशास्त्रे शुक्लपक्षस्य पञ्चदशतिथीनां निर्णयः क्रियते। ततः परं स्वस्वकक्षासु चलन्तौ सूर्यचन्द्रौ यदा (१९२) अंशानाम् अन्तरं सम्पादयन्ति तदा कृष्णप्रतिपत् पूर्तिः भवति। एवं क्रमशः अग्रे अग्रे १२-१२ अंशानां अन्तरम् वर्धमानं सत् यदा ३६० अंशान् पूरयति तदैव अन्योऽमान्तः सम्पद्यते। इति ज्यौतिषशास्त्रीयसिद्धान्तपक्षे त्रिंशत्तिथिनिर्णयः सम्पद्यते। अतोऽस्माभिः वक्तुं शक्यते-

**''भूगर्भबिन्दौ रविचन्द्रयोर्यदा दृश्यं भवेद् द्वादशभागमन्तरम्।**
**शास्त्रोदिता चन्द्रकलोद्भवा तिथिः सा देवरूपांशकलाऽमृताह्वया।**
**तनोति शीतांशुकलामिनांशैः स्फुटैः रवीन्द्वोर्विवरोद्भवैर्या।**
**एकैव प्रोक्ता निगमागमज्ञैः तिथिर्न चान्या कथिता मुनीन्द्रैः।''**

दृश्यतिथेः लक्षणं -

**सुसंस्कृता चेन्नतिलम्बनाभ्यां दृश्या भवेत्सा भुवि पृष्ठगानां**
**भूपृष्ठद्रष्टा नतिलम्बनोना भूकेन्द्रगा सैव तिथिः कलात्मा।**

एतदतिरिक्तं भारतीयज्यौतिषशास्त्रे तिथीनां एकम् आध्यात्मिकस्वरूपम् एकञ्च आधिदैविकं स्वरूपमपि व्याख्यातमस्ति। तदर्थमेव तिथीनां देवताः (अधिष्ठातारः) अपि निर्दिष्टाः सन्ति - श्री अनन्तदैवज्ञसुतः श्री रामदैवज्ञः कथयति [१६]-

**तिथीशाः वह्निकौ गौरी गणेशोऽहिर्गुरो रविः।**
**शिवो दुर्गान्तको विश्वे हरिः कामः शिवः शशी।।**

मुहूर्तचिन्तामणिः, शुभाशुभप्रकरणं श्लो. ३

पुराणदृष्ट्या तिथीनां देवताः इत्थम् प्रतिपादिताः सन्ति [१७] -

**वह्निर्विरञ्चिर्गिरिजा गणेशः फणी विशाखो दिनकृन्महेशः।**
**दुर्गान्तको विष्णुर्हरिः स्मरश्च शर्वः शशी चेति पुराणदृष्ट्या।**
**तिथौ हि दर्शसंज्ञको पितृनुशन्त्यधीश्वराः।**
**त्रयोदशीतृतीययोः स्मृतस्तु वित्तपोऽपरैः।।**

**तिथिपाश्चतुर्मुखविधातृविष्णवो यमशीतदीधितिः विशाखवज्रिणः।**
**वसुनागधर्मशिवतिग्मरश्मयो मदनकलिस्तदनु विश्व इत्यपि।**

ज्योतिषरत्नमालायां तिथिप्रकरणे श्लो. १ तः ३ यावत्

वेदेषु तिथीनां देवत्वं किञ्चिद्भिन्नमस्ति। यथा यजुर्वेदीयमाध्यन्दिनीयशाखायां तिथिदैवतप्रतिपादकौ मन्त्रौ एवं स्तः[१८] –

**ॐ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रियस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्रियाण्यै षष्ठी मरुता छ्ँ सप्तमी बृहस्पतेरष्टम्यर्यम्णोर्नवमी धातुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यमस्य त्रयोदशी। इन्द्राग्न्योः पक्षतिः सरस्वत्यै निपक्षतिः मित्रस्य तृतीयायां चतुर्थी निऋत्यै पञ्चम्यग्नीषोमयोः षष्ठी सर्पाणां सप्तमी विष्णोरष्टमी पूष्णोर्नवमीत्वष्टुर्दशमीन्द्रस्यैकादशी वरुणस्य द्वादशी यम्यै त्रयोदशी द्यावा पृथिव्योर्दक्षिणपार्श्वे विश्वेषां देवानामुत्तरम्।**

यजुर्वेदीयमाध्यन्दिनीयशाखायां २५.४ तथा च २५.५

धर्मकृत्योपयोगीतिथेः ग्राह्याग्राहयत्वविषये सामान्यनियमः तिथिनिर्णये एवमस्ति [१९] –

**यां तिथिं समनुप्राप्य उदयं याति भास्करः।**
**सा तिथिः सकला ज्ञेया दानाध्ययनाकर्मसु।।**
**अवाप्य यामस्तमुपैति सूर्यः तिथिः मुहूर्तत्रयव्यापिनीञ्च।**
**धमार्थकृत्येष्वखिलेषु पूर्णां वदन्ति तां कालविदः पुराणाः।।**

ज्योतिषरत्नमालायां, तिथिनिर्णये श्लो. २३

त्रिद्युस्पृशाख्या तिथिलक्षणं सफलम् –

**यद्यैकः स्पृशति तिथिद्वयावसानम्।**
**वारश्चेदवमन्तदुक्तमार्यैः। यः स्पर्शाद्भवति तिथित्रयस्य।**
**चाह्नांत्रिद्युक्स्पृशति पुनरिदं द्वयञ्च नेष्टम्।**

यदाह वशिष्ठः –

**स्युस्तिस्रस्तिथयो वारे एकस्मिन्नवमा तिथिः।**
**तिथिर्वारत्रयं चैका त्रिद्युस्पृक्द्वेतिनिन्दिते।।**
**कृतं यन्मङ्गलं तत्र त्रिद्युस्पृगवमे दिने।**
**भस्मीभवति तत्क्षिप्रमग्नौ सम्यग्यथेन्धनम्।।**

तिथिक्षयवृद्धिस्वरूपप्रतिपादनपूर्वकम् **क्षयसंज्ञकवृद्धिसंज्ञकतिथिनिर्णयः** –

**तत्र तिथिक्षयलक्षणं** - तत्र यो वारः तिथिद्वयान्तरं स्पृष्ट्वा तृतीयतिथेः कञ्चिदादिमभागमपि स्पृशति। तत्र वारे मध्यमा तिथिक्षयसंज्ञा। यथा दशमी गुरौ घटिकाद्वयं पुनः एकादशी गुरौ सप्तपञ्चाशत् घटिकाः पुनश्च द्वादश्याः एकघटिका गुरुवारेण सह सम्बद्धमिति एकादशीतिथिः क्षयसंज्ञिता अवमसंज्ञितेत्यपि कथ्यते।

**अथ तिथिवृद्धिलक्षणं** - तत्र या तिथिर्वारद्वयान्तरं स्पृष्ट्वा तृतीयवारस्यादिमं कञ्चिद्भागं स्पृशति सा तिथिर्वृद्धिसंज्ञा त्रिद्युस्पृगित्यपि च केचन आहुः। यथा चतुर्थी सोमे नवपञ्चाशत् ५९ घटिकाः ततः परं पञ्चमी भौमे षष्टि ६० घटिकाः ततो बुधवासरे पञ्चमी घटिकाद्वयम् अतः पञ्चमी वारत्रयसम्बद्धा तिथिः वृद्धिसंज्ञा। अस्य शुभकृत्यावश्यके तिथिक्षयतिथिवृद्धयोः परिहारं दोषापवादाध्याये वशिष्ठः आह -

**अवमाख्यं तिथेर्दोषं केन्द्रगो देवपूजितः।**
**हन्ति यद्वत् पापचयं व्रतं द्वैवार्षिकं यथा।।**
**त्रिद्युस्पृगाह्वयं दोषं सौम्यः केन्द्रगतः सदा।**
**हन्ति यद्वत् पापचयमशून्यशयनव्रतम्।।**

पूर्णिमामावास्ययोः राकानुमत्यौ कुहूसिनावालीति लक्षणानि [२०]-

**राकानुमत्यावपि पूर्णमास्यौ रात्रिद्युदृष्टेन्दुवशाद् भवेतां।**
**कुहूसिनीवाल्यपि नष्टदृष्टे चन्द्रे स्मृते चासितपञ्चदश्यां।।**

शुभाशुभतिथीनां निर्णये सिद्धियोगादीनां निर्माणे तिथीनां नन्दादिसंज्ञाः अपि ज्ञेयाः। ताश्च यथा -

**नन्दा च भद्रा च जया च रिक्ता पूर्णेति तिथयोऽशुभमध्यशस्ताः।**
**सितेऽसिते शस्तसमाधमाः स्युः सितज्ञभौमार्किगुरौ च सिद्धाः।।**

मु.चि.शु.शु प्र. श्लो. ४

**सिद्धियोगः** - अत्र नन्दायां प्रतिपद्षष्ठ्यैकादश्यां शुक्रवासरे सिद्धियोगः, भद्रायां (द्वितीयासप्तमीद्वादश्यां) बुधवासरे सिद्धियोगः। एवमेव जयायां (तृतीयाष्टमीत्रयोदश्यां) भौमवासरे, रिक्तायां (चतुर्थीनवमीचतुर्दश्यां) शनिवासरे, पूर्णायां (पञ्चमीदशमीपौर्णमास्यां) गुरुवासरे च सिद्धियोगः भवति।

**कश्यपवचनम्** [२१]- "नन्दा तिथिः शुक्रवासरे सौमे भद्रा कुजे जया।
रिक्ता मन्दे गुरोर्वारे पूर्णा सिद्धाह्वया तिथिः॥"

**वसिष्ठवचनम्** [२२] - शुक्रज्ञगुरुमन्देज्या वारा नन्दादिषु क्रमात्।
सिद्धा तिथिः सिद्धिदा स्यात्सर्वकार्येषु सर्वदा ।।

**वशिष्ठोक्ता सिद्धाफलस्तुतिः**[२३] - **सिद्धातिथिर्हन्ति समस्तदोषान्**
**या मासशून्यानपि मासदग्धान्।**
**दिनप्रदग्धानपि चान्वदोषा**
**नेकादशी यद्वदशेषपापान् ।**

**मृतामृतयोगार्थं तिथिनिर्णयः -**

**''नन्दा भद्रा नन्दिकाख्या जया च रिक्ता भद्रा चैव पूर्णामृतार्कात्।''**

रविवासरे नन्दा (१-६-११)तिथयः, सोमवासरे भद्रा (२-७-१२) तिथयः, भौमवासरे नन्दा, बुधवासरे जया (३-८-१३) तिथयः, शुक्रवासरे भद्रातिथयः, शनिवारे पूर्णा (५-१०-१५) तिथयः अमृतयोगकारकाः भवन्ति।

**नारदः** - अस्मिन् तिथिवारयोगे मृतियोगम् कथयति [२४] -

**''आदित्यभौमयोर्नन्दा भद्रा शुक्रशशांकयोः**
**जया सौम्ये गुरौ रिक्ता शनौ पूर्णा मृतिप्रदा।।''**

वशिष्ठः स्पष्टरूपेण अमृतयोगम् पुष्णाति [२५] -

**''नन्दाभौमार्कयोर्भद्रा शुक्रेन्द्वोश्च जया बुधे।**
**शुभयोगा गुरौ रिक्ता शनौ पूर्णाऽमृताह्वया।।''**

कश्यपोऽपि तथैवाह [२६]-

**''आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः।**
**जया सौम्ये गुरौ रिक्ता पूर्णाऽर्कावमृता शुभा।''**

**(विज्ञैः विचार्य निर्णेयम्)**

**कृत्यविशेषे तिथिनिर्णयः - (वशिष्ठेन प्रोक्तः[२७])**

**नोद्वाहयात्रोपनयप्रतिष्ठा सीमन्तचौलाखिलवास्तुकर्म।**
**गृहप्रवेशाखिलमङ्गलाद्यं कार्यं हि मासाद्यतिथौ कदाचित्।। १।।**

(मासाद्यतिथौ = शुक्लपक्षप्रतिपदि कदाचित्, अतः एव कृष्णपक्षप्रतिपदि एतानि सुखेन भवन्तीत्यर्थः) यद्येषोऽभिप्रायोऽसंगतः स्यात्तदा पक्षाद्यतिथाविति ब्रूयात्।

**सप्ताङ्गचिह्नानि नृपस्य वास्तुव्रतप्रतिष्ठाखिलमङ्गलानि।**
**यात्राविवाहाखिलभूषणाद्यं कार्यं द्वितीयादिवसे सदैव।। २।।**

**संगीतविद्याखिलशिल्पकर्म सीमन्तचौलान्तगृहप्रवेशं।**
**कार्यं द्वितीयादिवसे यदुक्तं सदा तृतीयादिवसेऽपि कार्यम्।। ३।।**

रिक्तासु ( चतुर्थीनवमीचतुर्दशीसु ) विद्युदव-
धबन्धशस्त्रविषाग्निघातादि च याति सिद्धिम्।
यन्मङ्गलं तासु कृतं च मूढैर्वैनाशमायाति तदाशु नूनम्।। ४।।

शुभानि कार्याणि चरस्थिराणि चोक्तान्यनुक्तान्यपि यानि तानि।
सिद्धिं प्रयात्याशु ऋणप्रदानं विना सदा नागतिथौ विधेयम्। ५।

अभ्यङ्गयात्रापितृकर्मदन्तकाष्ठं विना पौष्टिकमङ्गलानि।
षष्ठ्यां विधेयानि रणोपयोग्यशिल्पानि वास्त्वम्बरभूषणानि।। ६।।

द्वितीयायां तृतीयायां पञ्चम्यां कथितान्यपि।
तानि सिद्ध्यन्ति कार्याणि सप्तम्यां निखिलान्यपि।। ७।।

सङ्ग्रामयोग्याखिलवास्तुशिल्पनृत्यप्रमोदाखिललेखनानि।
स्त्रीरत्नकार्याखिलभूषणानि कार्याणि सर्वाणि महेशतिथ्यां।। ८।।

द्वितीयायां तृतीयायां पञ्चम्यां सप्तमीतिथौ।
उक्तानि यानि सिद्ध्यन्ति दशम्यां तानि सर्वदा।। ९।।

व्रतोपवासाखिलधर्मकृत्यसुरोत्सवाद्याखिलवास्तुकर्म।
संग्रामयोग्याखिलवास्तुकर्म विश्वे तिथौ सिध्यति शिल्पकर्म।। १०।।

पृथिव्यां यानि कर्माणि धर्मपुष्टिशुभानि च।
चरस्थिराणि द्वादश्यां यात्राऽन्नग्रहणं विना।। ११।।

विधातृगौरीभुजगभान्वन्तकदिनेषु च।
उक्तानि तानि सिध्यन्ति त्रयोदश्यां विशेषतः।। १२।।

यज्ञक्रियापौष्टिकमङ्गलानि संग्रामयोग्याखिलवास्तुकर्म।
उद्वाहशिल्पाखिलभूषणाद्यं कार्यप्रतिष्ठा खलु पौर्णमास्यां।। १३।।

सदैव दर्शे पितृकर्ममुक्त्वा नान्यद्विधेयं शुभपौष्टिकाद्यम्।
मूढैः कृतं तत्र शुभोत्सवाद्यं विनाशमायात्यचिरात् भृशं तत्।। १४।।

पक्षरन्ध्रतिथिनिर्णयः -

दोषनिरूपणाध्याये वशिष्ठवचनम् -

चतुर्दशी चतुर्थी च अष्टमी नवमी तथा।
षष्ठी च द्वादशी चैव पक्षच्छिद्राह्वया इमाः।

**क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः ।।**
**भूताष्टमनुतत्वाङ्कदशशेषास्तु शोभनाः।**
**दोषनाडीषु यत्कर्म शुभं सर्वं विनश्यति।**
**विवाहे विधवा नारी व्रात्यःस्याच्चोपनायने**
**सीमन्ते गर्भनाशः स्यात्प्राशने मरणं ध्रुवम्।**
**अग्निना दह्यते क्षिप्रं गृहारम्भे विशेषतः।**
**राजराष्ट्रविनाशः स्यात्प्रतिष्ठायां विशेषतः।**
**किमत्र बहुनोक्तेन कृतं कर्म विनश्यति।**

कुत्रचित् शास्त्रेपु अमावस्या अपि पक्षरन्ध्रतिथित्वेन प्रोक्ता।

मासशून्यतिथिनिर्णयः -

**अष्टमी नवमी चैव पक्षयोरुभयोरपि।**
**माधवे ( वै. ) द्वादशी त्याज्या पक्षयोरुभयोरपि।**
**ज्येष्ठे त्रयोदशी निन्द्या सिते कृष्णे चतुर्दशी।**
**आषाढे कृष्णपक्षस्य षष्ठी शुक्ले तु सप्तमी।**
**द्वितीया च तृतीया च श्रावणे सितकृष्णयोः।**
**प्रथमा च द्वितीया च नभस्ये ( भाद्रे ) मासि निन्दिते।**
**दशम्येकादशी निन्द्या मासांषे ( आश्विने ) शुक्लकृष्णयोः।**
**ऊर्जे ( कार्तिके ) चतुर्दशी शुक्ले कृष्णपक्षे तु पञ्चमी।**
**सप्तमी चाष्टमी सौम्ये ( मार्गे ) पक्षयोरुभयोरपि।**
**पौषे पक्षद्वये चैव चतुर्थी पञ्चमी तथा।**
**माघे तु पञ्चमी षष्ठी कृष्णे शुक्ले यथाक्रमम्।**
**तृतीया च चतुर्थी च फाल्गुने सितकृष्णयोः।**
**तिथयो मासशून्याख्या अंशवित्तविनाशदाः।**
**आसु श्राद्धं प्रकुर्वीत नैव मङ्गलमाचरेत्।**

नक्षत्रेण युतिवशात् निन्द्यतिथिनिर्णये चतुर्भुजमिश्रनिबन्धे लल्लवचनम् [२८]–

**द्वितीयया चानुराधा त्र्युत्तराश्च तृतीयया।**
**पञ्चमी च मघायुक्ता चित्रास्वात्या त्रयोदशी।**
**एषु कार्यं कृतं चेत्स्यात्मृत्युः षणमासानन्तरं ध्रुवम्।**
**प्रतिपद्युत्तराषाढा नवम्यां कृत्तिका यदि**
**पूर्वाभाद्रपदाष्टम्यामेकादश्यां च रोहिणी।**
**द्वादश्यां च यदाश्लेषा त्रयोदश्यां मघा यदि ।**

**( जन्मकाले अशुभतिथिनिर्णयः )**

**जन्मकालेऽशुभतिथिनिर्णये सिनीवालीकुहूदर्शानां प्रकारत्रयेण सफलं भेदोपपादनम्** [२९]-यदा खल्वमावस्या सूर्योदयात्प्रागिष्टघटिकात्रयवती तदा दृक्कर्मसंस्कारवशेन चन्द्रस्य दृश्यत्वमागतं चेत् तदा सा सम्पूर्णामावस्या सिनीवाली नाम। तादृश्याममावस्यायां द्वितीयसूर्यावधिकायामुत्पन्नस्यारिष्टशान्तये **सिनीवालीशान्तिस्तत्फलं चादेश्यम्।** अतिवृद्धौ वा तस्यामवास्यायां द्वितीयसूर्योदयानन्तरमवशिष्टामावास्या घटीपूत्पन्नस्य कुहूशान्तिरेव चन्द्रदर्शनलक्षणसत्वात्। यदि सैवामावस्या सूर्योदयात्प्राक् घटिकाचतुष्टयं वा प्रतिपत्सम्बद्धा तदा सिनीवाल्येव। अथ तादृश्यामेव न्यूनायामधिकायां वामावास्यायां तु दृक्कर्मसंस्कारवशेन चन्द्रस्यादृश्यत्वमागतं सामावस्या सम्पूर्णा कुहूर्नाम चन्द्रादर्शनलक्षणत्वात्, तत्र कुहूजननफलं सा शन्तिश्चादेश्या। यदा तु सूर्योदयानन्तरं कियतीपु घटीषु अतिक्रान्तासु अमावस्याप्रवृत्तिः ततः पूर्वं चतुर्दश्येवावस्थिता तस्यामुषसि दृक्कर्मवशतश्चन्द्रो दृष्टोऽमा वादर्शि। तस्याममावस्यायां चन्द्रदर्शनादर्शनलक्षणानाक्रान्तत्वात् सामावस्या सम्पूर्णं दर्शो नाम दर्शजननफलं शान्तिश्च विधेयेति श्रीगोविन्ददैवज्ञाः ऊचुः एवम् अमावस्याभेदेन सिनीवालीकुहूदर्शरूपसञ्ज्ञात्रयम् सावकाशमित्यस्मन्मतम्।

**विषयेऽस्मिन् वसिष्ठवचनम्** [३०]-

**नक्षत्रे यस्य दर्शान्ते विषनाड्यां भवेद्यदि।**
**कुहूयोग इति ख्यातो व्याधिमृत्युभयादिकृत्।**

यस्मिन्नक्षत्रे या विषनाडयः उक्तास्तास्मिन्काले यदि दर्शस्य चरमनाडी भवेत्, तन्नक्षत्रं यस्य पुरुषस्य जन्मर्क्षं जन्मकाले कालान्तरे वा स्यात् तस्य पुंसो व्याधिमृत्युभयकृत् कुहूः योगो ध्येयस्तत्र कुहूजननफलं शान्तिश्च स्यात्। कालान्तरेऽपि कुहूयोगसम्भवे शान्तिर्विधेया।

**कुहूयोगे विशेषः - जन्मांशे यदि कुहू स्यात् षण्मासान्मृत्युदायकः।**
**जन्मलग्नेऽथ जन्मांशे मृत्युर्मासत्रयाद्भवेत्।।**

अर्थात् पूर्वोक्तकुहूयोगकाले यदि जन्मनवांशे चन्द्रः स्यात्तदा षण्मासमध्ये मृत्युः। यदि जन्मलग्ने तस्मिन्काले जन्मांशगश्चन्द्रश्च इत्युभयसम्भवे मासत्रयेण मृत्युरिति भावः। एत एवोक्तम् जगन्मोहने वसिष्ठ : -

**यस्य जन्मर्क्षगश्चन्द्रो विषनाड्यां कुहूर्भवेत्।**
**अभिचारेण किं तस्य स्वयमेव मरिष्यति।।**

अनेन सिद्ध्यति विषघटिकातो पूर्वकालः दर्शशब्दवाच्यः। एवमस्माभिः प्रकारत्रयेण सिनीवाली कुहूदर्शानां भेदनिर्णयः तिथिनिर्णये उपपादितः। एतासां

सिनीवालीकुहूदर्शानां शान्तिः अपि पृथक् पृथक् भवति। तत्सर्वं शान्तिग्रन्थेषु द्रष्टव्यम्। अत्र एतासां जन्मनि पृथक्-पृथक् फलमपि भवद्भिः अवगन्तव्यम्। यथा चाह गार्ग्यः -

**सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा।**
**गवाश्वं महिषी चैव शक्रस्यापि श्रियं हरेत्।**
**ये च सन्ति द्विजाश्चान्ये स्वप्रसादोपजीविनः।**
**वर्जयेत्तानशेषास्तु पशुपक्षिमृगादिकान्।**
**कुहूप्रसूतिरत्यर्थं सर्वदोषकरी नृणां।**

यस्य प्रसूतिरत्रस्यात्तस्यायुर्धननाशनम्। सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत्। नारीं विना विशेषाणां परित्यागो विधीयते। परित्यागात्तत्र शान्तिं कुर्याद्धीमान्विचक्षणः। तत्फलं तत्क्षणार्धेन पुनरेव विलीयते। न त्यजेत्पण्डितो मोहादर्थादज्ञानतोऽपि वा। तद्योगं नाशयेदाशु स्वयं वा नाशमृच्छति। कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये। अथातो दर्शजातानां मातापित्रोर्दरिद्रता। तद्दोषपरिहारार्थं शान्तिं कुर्याद् विधानतः। **जन्मकाले ( दिवा रात्रौ वा ) कृष्णचतुर्दशीप्राप्तौ विभागतः अशुभत्वनिर्णयः** [३१]- (गर्गवचनम्) कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम्।

**चतुर्दशीं च षड्भागां कुर्यादादौ शुभं स्मृतम्।**
**द्वितीये पितरं हन्ति तृतीये मातरं तथा।**
**चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम्।**
**षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम्।**
**तस्मात् सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः।**

**सारांशरूपेणास्माभिर्वक्तुं शक्यते** [३२]-

**वेदाः हि यज्ञार्थमभिप्रवृत्ताः यज्ञाः प्रोक्तास्ते तु कालश्रयेण।**
**शस्त्रादस्मात् कालबोधो यतः स्यात् वेदाङ्गत्वं ज्योतिषस्योक्तमस्मात्।।**

अथवा

**वेदाः हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वाऽभिहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।**

एवञ्च

**यज्ञादिसृष्ट्यैर्विविधाः विभागाः तिथ्यर्क्षयोगा ऋतुवर्षमासाः।**
**उभे च सन्ध्ये दिवसा निशाश्च होराऽथ लग्नं करणं मुहूर्ताः।।**
**इमानि सर्वाणि विनिश्चितानि सूर्यादिखेटैरुपकल्पितानि।**
**तत्साधनार्थं रचिताश्च ग्रन्थाः सद्वेधसिद्धाः श्रुतिसम्मताश्च।।**

वेदाङ्गज्योतिषञ्चादौ लगधेन विनिर्मितम्।
ततश्च ब्रह्मसिद्धान्तो वसिष्ठश्च ततः परम्।।
ततो कश्यपसिद्धान्तः सूर्यसिद्धान्त एव च।
दृक्तुल्यास्त इमे सर्वे स्वस्वकालेऽभवन्पुरा।।
एवं ते बहवो जाताः सिद्धान्ताः दृष्टिसम्मताः।
इदानीं सान्तराः जाताः ते सर्वे कालभेदतः।।
सूर्यसिद्धान्तशास्त्रेण स्फुटाः खेटाः यदाभवन्।
दृश्ययोग्यास्तदा पूर्वं गृहीता गणकोत्तमैः।।
इदानीं सान्तराः जाताः कालभेदान्नभश्चराः।
धर्मकार्येषु ते त्याज्याः श्रौतस्मार्तविवर्जिताः।।
तिथिश्चन्द्रकालमाना सूर्यचन्द्रान्तरोद्भवा तथा।
सूक्ष्मात्सूक्ष्मतरा ग्राह्या प्रत्यक्षा श्रुतिसम्मता।।
सूक्ष्मा दृश्यापि सा द्वेधा भूकेन्द्रस्थाऽथ पृष्ठगा।
धर्मकार्येषु भूमध्या वेधार्थं पृष्ठगा मता।।
येन शास्त्रेण दृश्यास्ते भवन्ति दिवि खेचराः।
स सिद्धान्तः सदैवार्षः स्वीकृतः पूर्वसूरिभिः।।
तद्भिन्नः सर्वदाऽनार्षः सर्वकर्मषु वर्जितः।
अतश्चन्द्ररवी साध्यावार्षाद् दृग्गणितागतात्।।
ताभ्यां साध्या तिथिर्दृश्या द्रष्टुर्भूकेन्द्रगस्य सा।
यतश्चन्द्रकलोत्पत्तिर्भवत्यर्कांशसम्मिता।।
द्रष्टुर्भूकेन्द्रसंस्थस्य सूत्रे चन्द्रार्कयोर्गते।
अन्तरं चानयोः शून्यं भवेत्पूर्वापराभिधं।।
साऽमावास्या बुधैर्ज्ञेया श्रौतस्मार्तसमर्थिता।
अन्तरं नेत्रभूभागं यदा पूर्वापराभिधं॥
प्रतिपन्नाम सा ज्ञेया तदन्ते विधुदर्शनम्।
तदैवेका कलापूर्तिदृश्या चन्द्रस्य जायते।।
एवं सा द्विकलापूर्तौ द्वितीया पूर्यते तिथिः।
धर्मकार्येष्वियं ग्राह्या तिथिर्भूगर्भदृग्गता।।
एषा बीज समायुक्ता भूपृष्ठे नेत्रगोचरा।
गणितस्य परीक्षार्थं वेधकर्मणि सा स्फुटा।।
श्राद्धादिधर्मकार्येषु भूपृष्ठस्था न शोभना।
नतिलम्बनयुक्ता चेद् भूगर्भीया तिथिर्यदि॥

भूपृष्ठे दृक्समा नो चेदशुद्धा कथिता बुधैः।
अतोऽशुद्धा तिथिस्त्याज्या धर्मकृत्येषु यत्नतः।।
इदानीं सूर्यसिद्धान्तात् ग्रहलाघवतोऽपि वा।
मकरन्दात् तथा सिद्धान्तथा कर्णकुतूहलात्।।
अशुद्धास्ते समायान्ति वेधाद्यन्त्रैरमूल्यकैः।
सर्वकार्येष्वतस्त्याज्याः ग्रहास्तिथ्यादयोऽपि च।।

बाणवृद्धिरसक्षयः – (कालमाधवे, तिथिचिन्तामणौ अन्यधर्मशास्त्रेषु च)

तिथेर्वृद्धिक्षयौ कैश्चित्परमौ परिकीर्त्तितौ।
सार्धबाणसपादाङ्गौ कैश्चित् बाणाङ्गसम्मितौ।।
इमौ द्वावेव संभ्रान्तौ तिथिजज्ञानविवर्जितौ।
अङ्कवृद्धिदशक्षीणौ प्रत्यक्षौ वेदसम्मितौ।।
धर्मशास्त्रभयादेतौ स्वतन्त्रौ शशिभास्करौ।
चरन्तौ दिवि तौ शक्यावरोद्धुं किमास्तिकैः।।
पादोनाङ्कसपादाङ्कतिथिवृद्धिर्क्षयान्विता।
सार्धबाणसपादाङ्गा केचिदिच्छन्ति सूरयः॥
कैश्चिद्बाणरसा प्रोक्ता कैश्चित्सप्तदिशास्तथा।
नानामानयुता भिन्ना तिथिर्वृद्धिक्षयाभिधाः।।
भिन्नकाले कृता वेधाः भिन्नाः स्युर्दृष्टिगोचराः।
यथैव प्राक्तनैर्दृष्टाः तथैव लिखिताः पुरा।।
तिथेर्वृद्धिक्षयौ स्यातां परमावङ्कसम्मितौ।
वेधात्प्रत्यक्षसंदृष्टौ श्रौतस्मार्तविनिश्चितौ।।

समाधानम् –

तत्रापि बाणर्द्धिरसक्षयं वचः सुरक्षितं धर्मविनिर्णयार्थः।
युते विहीने तिथिभोगमाने विनिर्णया भव्यतरा भवन्ति।।
भोगे क्षयिष्णाविहबाणवृद्धिः रसक्षयं चापि विवर्धमाने।
विधाय सर्वं परिचिन्तनीयं बुधैः सदा धर्मविनिर्णयेषु।।
प्रत्यक्षसिद्धौ न च वेदबाधा न धर्मशास्त्रस्य विधौ विरोधः।
ज्योतिर्विदां चापि न भेदबुद्धिः विनिर्णयोऽयं श्रुतिसम्मतो मे।।
दृक्पक्षसिद्धां हि तिथिञ्च खेटान् विहाय धर्मं तु विनिर्णयन्ति।
ते धर्मशास्त्रोदितकर्मलोपात् कुर्वन्ति सर्वेऽप्यघसंचयं वै।।

**तिथिर्मयोक्ताऽब्जकलाह्वयेयं प्रोक्ता पुरा या निगमागमेषु।**
**शास्त्रे हि यत्तत् कथितं मयेदं मयोक्तमेतद्धि तदेव शास्त्रे।।**

नाशङ्कनीयं **तिथिनिर्णयेऽस्मिन्** सर्वं स्फुटं तत् परिलेखतः स्यात्। प्रत्यक्षसिद्धौ नलिकादियन्त्रैर्विलोक्य विज्ञाः मुदिताः भवन्तु।

---

१. स्कन्दपुराणे
२. वसिष्ठसंहितायां
३. सिद्धान्तशिरोमणौ
४. सि. शिरो. मरीचिटीकायां
५. तिथिचिन्तामणौ
६. सूर्यसिद्धान्ते
७. तिथितत्त्वे
८. सि. शिरो., स्पष्टाधिकारे, सङ्क्रान्तिप्रकरणं
९. गोभिलवचनम्
१०. भगवतीपुराणे
११. मत्स्यपुराणे
१२. तैत्तिरीयब्राह्मणे (१-५-२४)
१३. तैत्तिरीयारण्यके (३-११-२३)
१४. सूर्यसिद्धान्ते स्पष्टाधिकारे, श्लो. ६६
१५. केतकीग्रहगणितम्, स्पष्टाधिकारे, श्लो. ३५
१६. मुहूर्तचिन्तामणिः, शुभाशुभप्रकरणं श्लो. ३
१७. ज्योतिषरत्नमालायां, तिथिप्रकरणे श्लो. १ तः ३ यावत्
१८. यजुर्वेदीयमाध्यन्दिनीयशाखायां २५.४ तथा च २५.५
१९. ज्योतिषरत्नमालायाम्, तिथिनिर्णये श्लो. २३
२०. मु.चि.शु.शु प्र. श्लो. ४
२१. कश्यपवचनम्
२२. वसिष्ठवचनम्
२३. वशिष्ठोक्ता सिद्धाफलस्तुतिः
२४. नारदवचनम्
२५. वशिष्ठः
२६. कश्यपवचनम्
२७. वशिष्ठेन प्रोक्ताः फलस्तुतिः
२८. चतुर्भुजमिश्रनिबन्धे लल्लवचनम्
२९. मु.चि., पीयूषधाराटीका
३०. वसिष्ठवचनम् (जगन्मोहने)
३१. गर्गवचनम्

# संस्कृतसाहित्ये वनस्पतिजीवदर्शनम्

धनञ्जयवासुदेव द्विवेदी

अस्मिन् लेखे मानवानां वनस्पतीनां च सम्बन्धो दर्श्यते। वनस्पतीनां धार्मिकमहत्त्वप्रतिपादनमुखेन तासां जीवनदर्शनं, मानवजीवनेन घनिष्ठः सम्बन्धः, तासां संरक्षणोपायाः स्मृतिबोधिताश्च प्रदर्श्यन्ते। रामायणं, महाभारतं, शाकुन्तलमिति विविधाभिः कृतिभिः वनस्पतिजीवनदर्शनं निरूपयति प्रस्तोताऽत्र।

संस्कृतसाहित्ये वनस्पतिजगतो वर्णनं विविधरूपेण प्राप्यते। मानववनस्पतिजीवने भूयिष्ठं साम्यं वर्तते। यथैव मानवाः सन्ति तथैव अपि। मानवशरीरे लोमानि भवन्ति, वृक्षे पर्णानि। शरीरे त्वग् भवति, वृक्षे उत्पाटिका। पुरुषस्य त्वचः रुधिरं प्रस्रवति, वृक्षस्य उत्पाटिकातो निर्यासो निःसरति। शरीरे मांसानि, पादपे शकराणि; पुरुषे स्नायुजालानि विद्यन्ते, वृक्षे किनाटानि। स्नायुजालवत् किनाटान्यपि स्थिराणि भवन्ति। पुरुषस्य स्नायुजालाभ्यन्तरे यथा अस्थीनि सन्ति तथैव वृक्षेऽपि किनाटाभ्यन्तरे काष्ठानि। मज्जा तु मानवशरीरे तथा वृक्षे समानरूपेण प्राप्यते–

**"यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।**
**तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः॥**
**त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः।**
**तस्मात्तदातृण्णात् प्रैति रसो वृक्षादिवाहतात्॥**
**मांसान्यस्य शकराणि किनाट स्नाव तत् स्थिरम्।**
**अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता॥"[1]**

सम्पूर्णं भौतिकं जगत् अव्यक्तपरमेश्वरस्य योगमायया उत्पद्यते।[2] ईश्वरः सर्वमभिव्याप्य तिष्ठति। तं विना ब्रह्माण्डस्य किमपि वस्तु स्थातुं न शक्नोति–

**"न तदस्ति विना यत्स्यान्मया भूतं चराचरम्॥"[3]**

भवन्तु मानवाः, सागराः, नद्यः, गिरयः, वनानि, वनस्पतयः, अन्यानि च सकलानि भौतिकवस्तूनि वा सर्वत्र भगवत एवैश्वर्यं विलसति। मानवानां सुखसमृद्ध्यर्थं

वनस्पतीनाम् अस्तित्वं सुतरां महत्त्वपूर्णमस्ति। अतिप्राचीनकालादेव मानवसमाजेन तत्संस्कृत्या च सह वनस्पतीनां प्रगाढः सम्बन्धो वर्तते। मानवस्य सामाजिकविकासे, आर्थिकप्रगतौ सांस्कृतिकेऽभ्युदये, औषधिविज्ञानसमुन्नतौ अन्यान्यप्रगतिक्षेत्रेषु च वनस्पतीनां योगदानं सर्वथा उल्लेखनीयमास्ते। वनस्पतीनामपि विकासे संरक्षणे च मानवानामपि योगदानं महत्त्वपूर्णं विद्यते। तत्त्वद्रष्टारो ऋषयः सर्वप्रथमं वनस्पतीनां यथार्थज्ञानं प्राप्तवन्तः। गृहस्थानां, मुनीनां, तपस्विनां, गुरुकुलानां, साधकानां, चिन्तकानां, पशुपक्षिणां, परिशुद्धवातावरणस्य च कृते वनस्पतयो महोपयोगिनः सन्ति। ते सर्वेषां कृते कल्याणकारिणो वर्तन्ते। तेषां सर्वाणि अङ्गानि परोपकारार्थम् – पुष्पाणि, फलानि, पत्राणि, काष्ठानि, मूलानि सर्वाण्यपि अवयवानि विश्वजनीनानि। तेषां किमपि वस्तु स्वार्थाय नहि। सुभाषितग्रन्थेषु साधु कथितम्–

**"परोपकाराय फलन्ति वृक्षाः।"[४]**

x x x

**"छायावन्तो गतिव्यालाः स्वरोहाः फलदायिनः।**
**मार्गद्रुमा महान्तश्च परेषामेव भूतये॥"[५]**

संस्कृतसाहित्ये धार्मिकदृष्ट्या वनस्पतीनां सादरं चित्रणं प्राप्यते। तेषां धार्मिकस्वरूपं विपुलतत्त्वीयं विविधपक्षीयं च वरीवर्त्ति। काव्यजगति पादपाः पुत्रवत् स्वीक्रियन्ते। तस्मात् सहृदयाः सर्वदा तैः सह पुत्रवद् व्यवहरन्ति। सानुरागं तेषां रोपणं संरक्षणं पोषणं विकासं विस्तारं च कुर्वन्ति। महाभारते एतत्सम्बन्धे स्पष्टनिर्देशा अवाप्यन्ते–

**"वृक्षदं पुत्रवद् वृक्षास्तारयन्ति परत्र तु॥**
**तस्मात् तडागे सद्वृक्षा रोप्याः श्रेयोऽर्थिना सदा।**
**पुत्रवत् परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः॥[६]**

यथा पुत्रः 'पुम्' नामकनरकात् स्वपितरं तारयति तथैव वृक्षोऽपि स्वरोपयितारं त्रायते। विष्णुधर्मसूत्रेऽपि उल्लिखितम् अस्ति यत्– "रोपयितुर्वृक्षाः परलोके पुत्रा भवन्ति।" महाभाष्यकारेणापि निगदितं यत्, आम्रवृक्षसेचनेन पितरः प्रीयन्ते–"आम्रश्च सिक्ताः पितरश्च प्रीताः।" वृक्षारोपणस्य धार्मिकमहत्त्वम् अनुसृत्य महाभारते कथितमस्ति–

**"एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे।**
**कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम्॥**

**लभते नाम लोके च पितृभिश्च महीयते।**
**देवलोके गतस्यापि नाम तस्य न नश्यति।।**

**अतीतानागते चोभे पितृवंशं च भारत।**
**तारयेद् वृक्षरोपी च तस्माद् वृक्षांश्च रोपयेत्।।**
**तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः।**
**परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान्।।"[७]**

कतिपयपादपाः धार्मिकदृष्ट्या विशेषरूपेण महत्त्वपूर्णाः सन्ति। 'वृक्षायुर्वेद'–इत्याख्ये ग्रन्थे प्रतिपादितमस्ति यत् यो नरः एकम् अश्वत्थम्, एकं पिचुमन्दम्, एकं न्यग्रोधं, दश चिञ्चिणीं, त्रयं कपित्थबिल्वामलकं पञ्चाम्रवृक्षान् चारोपयति स कदापि नरकं न याति–

**"अश्वत्थमेकं पिचुमन्दमेकं न्यग्रोधमेकं दश चिञ्चिनीकम्।**
**कपित्थबिल्वामलकत्रयञ्च पञ्चाम्रवापी नरकं न पश्येत्।।"[८]**

यत्र च सपुष्पफला वृक्षा उच्छिद्यन्ते तत्र प्रकृतिः रुष्टा सञ्जायते। तत्र अतिवृष्टिः अनावृष्टि दुर्भिक्षं च प्रादुर्भवति येन तत्रस्था जना बहुविधक्लेशं प्राप्नुवन्ति। तस्माद् वृक्षाः कदापि नहि विच्छेद्याः। कविकुलगुरुकालिदासस्तु इदमपि व्याहरति यत् पुष्पफलदायिवृक्षाणां का कथा, विषवृक्षोऽपि कदापि नहि छेदनीयः–

**"विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।"[९]**

वृक्षाः सर्वेषां प्राणिनां कृते जीवनप्रदातारो भवन्ति। अतस्तेषां जीवनं सर्वोत्कृष्टं जीवनम्। ते महीरुहा धन्याः सन्ति येषां पार्श्वात् कोऽपि जनो निराशो न याति। ते स्वपुष्पैः पत्रैः फलैः छायाभिः मूलैः वल्कलैः काष्ठैः गन्धैः निर्यासैः भस्मभिः अङ्गारैः शाखाभिश्च सर्वेषां कल्याणं कुर्वन्ति–

**"पत्रपुष्पफलच्छायामूलवल्कलदारुभिः।**
**गन्धनिर्यासभस्मास्थितोक्मैः कामान् वितन्वते।।"[१०]**

स्वसुखनिरभिलाषः पादपो लोकहितार्थं प्रतिदिनं कष्टं सहते, मूर्ध्ना सुतीव्रमातपमनुभवति परन्तु सर्वदा संश्रितानां छायया परितापं शमयति–

**"स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः**
**प्रतिदिनमथवा ते वृत्तिरेवं विधैव।**
**अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं**
**शमयति परितापं छायया संश्रितानाम्।।"[११]**

वृक्षाणां पञ्चोपकाराः पञ्चदैनिका महायज्ञाः सन्ति। गृहस्थेभ्यः ईन्धनं, पथिकेभ्यः छायां विश्रामस्थलं च, खेचरेभ्यश्च नीडस्थानं प्रदाय उपकारं कुर्वन्ति। प्राणिनां रोगापनयनार्थं च ते स्वपत्रैः मूलैः त्वगादिभिश्च औषधं वितरन्ति। इत्थं ते कोकिलेभ्यो मञ्जरीं भ्रमेरभ्यः परागम् अन्यजनेभ्यश्च फलानि सम्प्रदाय भूयिष्ठम् उपकारं सम्पादयन्ति। तेऽनुपमपरोपकारिणो वर्तन्ते। पर्यावरणस्य परिष्कारार्थं ते अहर्निशं कार्यं कुर्वन्ति। चाणक्यनीतिदर्पणे साधु प्रतिपादितं यत् एकेनैव सुगन्धिना सुवृक्षेण सम्पूर्णं वनं पर्यावरणं च आनन्दमयं सुवासितं विधीयते यथा एकेनैव सुपुत्रेण सम्पूर्णकुलं संसारे कीर्तिं ख्यातिम् अभ्युन्नतिं च प्राप्नोति–

**"एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।**
**वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा।।"**[१२]

अस्माकं शास्त्रेषु वनस्पतिलोकेन सह कथं व्यवहर्त्तव्यमित्येतत्सम्बन्धे प्रचुरनिर्देशाः प्रदत्ताः सन्ति। सामान्यतया सर्वे पादपाः समानरूपेण आदरणीयाः। संस्कृतवाङ्मयस्य अवगाहनेन इदं स्पष्टम् अस्ति यत् वृक्षाः प्राचीनकालादेव देवता इव पूजिता आसन्। कथितमस्ति–

**'नमो वृक्षेभ्यः'**[१३]
**'ओषधीनां पतये नमः'**[१४]
**'अरण्यानां पतये नमः'**[१५]
**'नमः वन्याय च'**[१६]

ऋग्वेदे तु एकं सम्पूर्णं सूक्तं वनदेवतायै प्रस्तुतं यत्र प्रभूतान्नयुता अरण्यानी सर्वेषां जन्तूनां मातृरूपेण वर्णिता।[१७] कतिपयवृक्षा विशेषरूपेण पूजनीया अभिवन्दनीयाः। एतादृशेषु पादपेषु वटस्य आम्रस्य तुलस्या अश्वत्थस्य बिल्वस्य धात्र्याः निम्बस्य प्लक्षस्य पलाशस्य उदुम्बरस्य च स्थानमतिशयमहत्त्वपूर्णमास्ते। अस्मिन् सम्बन्धे 'वृक्षायुर्वेद'–इत्याख्ये ग्रन्थे विस्तृतं वर्णनं प्राप्यते–

**"एकमेव हि योऽश्वत्थं रोपयेद्विधिना नरः।**
**यत्र कुत्रापि वा स्थाने गच्छेत्स भवनं हरेः।।**

**यावद्दिनानि तुलसी रोपितापि यद्गृहे वसेत्।**
**तावद्वर्षसहस्राणि वैकुण्ठे स महीयते।।**

**यस्तु संरोपयेद्बिल्वं शङ्करप्रीतिकारकम्।**
**तत्कुलेऽपि सदा लक्ष्मीः संतिष्ठेत्पुत्रपौत्रिकी।।**

**तेनेष्टा बहवो यज्ञास्तेन दत्ता वसुन्धरा।**
**स सदा ब्रह्मचारी स्याद्येन धात्री प्ररोपितः॥**

**वटवृक्षद्वयं मर्त्त्यो रोपयेद्यो यथाविधिः।**
**शिवलोके गमेत्सोऽपि सेवितस्त्वप्सरोगणैः॥**

**निम्बत्रयं समारोप्य नरो धर्म्मविचक्षणः।**
**सूर्यलोकं समासाद्य वसेदब्दायुतत्रयम्॥**

**पञ्चाम्रशाखिणां षण्णां यः कुर्यात्प्रतिरोपणम्।**
**गारुडं लोकमासाद्य मोदते देववत्सदा॥**

**पलाशशाखिनः सप्त रोपयेदेकमेव वा।**
**ब्रह्मलोकमवाप्नोति मोदते चामरैः सह॥**

**उदुम्बरद्रुमानष्टौ रोपयेत्स्वयमेव यः।**
**प्रेरयेद्रोपणायापि चन्द्रलोके स मोदते॥"**[१८]

वृक्षाः न केवलं पुष्पैः फलैः काष्ठादिभिश्च विश्वं समृद्धं कुर्वन्ति, अपितु प्राणदायकवायुना पर्यावरणमपि माधुर्यमयं कुर्वन्ति। अतएव वृक्षाः सर्वथा संरक्षणीयाः। काव्यपुराणनाटकादिष्वपि वनस्पतिसंरक्षणार्थं स्पष्टकथनं लभ्यते। पुष्पाणां फलानां चोत्पादकवृक्षाणां विच्छेदो दण्डनीयोऽपराधोऽस्ति इत्यपि निवेदिताः कविभिः। बादरायणश्रीकृष्णद्वैपायनेन पर्यावरणसन्तुलनाय वनानां महत्त्वमित्थं प्रतिपादितं महाभारतस्य उद्योगपर्वणि–

**"निर्वनो वध्यते व्याघ्रो निर्व्याघ्रः छिद्यते वनम्।**
**तस्माद् व्याघ्रो वनं रक्षेद् वनं व्याघ्रं च पालयेत्॥"**[१९]

वराहपुराणे इदं तथ्यं स्थापितमस्ति यत् यः नगरोपवने स्थितान् वृक्षान् छिनत्ति सः जृम्भणं नाम नरकं प्रति गच्छति। वृक्षजातीनां छेदनं तु साक्षाद् नरकमेव–

**"छेदनं वृक्षजातीनां द्वितीयं नरकं स्मृतम्।"**[२०]

मत्स्यपुराणे तु वृक्षछेदनस्य कृते विविधदण्डानि निर्धारितानि सन्ति। तद्यथा–

**"वृक्षं तु सफलं छित्त्वा सुवर्णं दण्डमर्हति।**
**द्विगुणं दण्डयेच्चैनं पथि सीम्नि जलाशये॥**

रामप्रसादस्तवे भगवद्रामस्य कृपा पादसेवनमहिमानञ्च वर्णयता तेनोदीरितम्–

**मया स्तोतुं मायामनुजवर चित्ते वचसि वा**
**कठोरे यत्कृष्टं कमलमृदुलं ते पदयुगम्।**
**क्षमस्वेदं किञ्चित्स्तुतिरियमधीता तव पुरो**
**जनानामिष्टार्थाञ्जनयतु कृपां ते विदधती।।**[३२]

अर्चनम्

अर्चनमिति शब्दः √अर्च् पूजायाम् धातोर्निष्पन्नः। अस्याभिप्रायोऽस्ति पूजनम्। नारदभक्तिसूत्रे इदं 'पूजाभक्तिः' इति नाम्नाभिहितम्। वस्तुतस्तु अर्चनमितिभक्तिप्रकारः पूजाविधेरन्तर्गतं परिगणितः। 'श्रीरामार्चनपद्धति' इत्याख्ये ग्रन्थे रामार्चनस्य व्यावहारिकं पक्षं प्रतिपादयता रामानन्देन भगवद्भक्ता आदिष्टा यत्तैर्न केवलं पूजासम्भारास्साधनीया अपितु भगवन्मन्दिरस्य मार्जनमपि कार्यम्। पूर्वोक्तग्रन्थे सन्दर्भेऽस्मिन् मूर्तिस्नानं, पार्षदाह्वानं, षोडशोपचारपूजनं, साङ्गसायुधपरिकरपूजनविधिः, रामस्तुतिः, राजभोगः, प्रसादार्पणादयः विषयाः विस्तरेण वर्णितास्सन्ति। पूजनविधिदृष्ट्या परव्यूहविभवान्तर्याम्यर्चावताररूपात्मकस्य भगवतः केवलमर्चावतार एव पूजयितुं शक्यः यतो हि अर्चनाप्रकारेऽस्मिन् भक्तेन श्रद्धानुसारं भगवान् यदपि वस्त्वाश्रित्य यस्मिन्नपि रूपे प्रतिष्ठीयते पूज्यते वा तस्मिन्नेव रूपे विद्यमानः सः भक्तस्य पूजां स्वीकरोति भवतु नाम सः लोष्ठरूपः, दारुरूपः, धातुरूपः उत वा प्रस्तररूपः, पूजेयं शास्त्रीयकर्मकाण्डरूपेण भावरूपेण इति पद्धतिद्वयेन प्रस्तोतुं शक्यते। रामभद्रदीक्षितस्तोत्रेषु यद्यपि कर्मकाण्डीयार्चनस्य विभिन्नान्यङ्गानि सङ्केतितानि सन्ति तथापि अत्र भावस्यातिशय्यं सविशेषं वर्तते स्वकीयस्योपास्यस्य रामस्य ब्रह्मत्वसर्वज्ञत्वसर्वव्यापकत्वप्रकाशत्व–सच्चिदानन्दरूपत्वात् तं प्रति भक्तस्य समर्पणत्वाच्च। उपास्यस्य वैशिष्ट्यान्येतान्यालक्ष्यैव आचार्यदीक्षितस्तोत्रेषु रामं न केवलं ब्रह्माविष्णुमहेशवासवादिदेवाः प्रणमन्ति अपितु समस्ताः नवग्रहा अपि तमेव स्तुवन्ति।

**वेधोविष्णुमहेशवासवमरुद्वह्न्यर्कचन्द्रादयो**
**यस्याज्ञां परिपालयन्ति शिरसा देवा नमोवाकिनः।**
**सत्यानन्दचिदुज्ज्वलप्रकृतये सर्वाधिपत्यस्पृशे**
**तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।**[३३]

रामभद्रदीक्षितमतेन वन्दनस्य इयती महत्तास्ति यत् तेन विश्वगर्भस्तोत्रं नामकमेकं प्राञ्जलिरूपात्मकं स्तवं प्रणीतम्। स्तवस्यास्योपनामास्ति–'जानकीजानिः स्तवम्'। पञ्चविंशत्यधिकशतनामात्मकेऽस्मिन् स्तवे प्रत्येकं पद्यस्य चतुर्थपादे "तस्मै

प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये" इति शब्दावलीयं प्रयुक्तास्ति। रामभद्रदीक्षितानुसारं न केवलं राम एव पापमोचक अपितु तस्य बाणचापतूणीरादीनि आयुधान्यपि तत्सदृशानि पापापहारीणि सन्ति। भक्तानाङ्कृते एतेषामायुधानां कल्पवृक्षरूपतामलौकिशक्तिञ्चाश्रित्य आचार्यदीक्षिता बाणं प्रणमति विभिन्नरूपेण च तं वन्दते।[३४]

**दास्यं सख्यञ्च**

दास्यभक्तेर्मुख्यमङ्गं समर्पणमस्ति। रामभद्रदीक्षितस्तोत्रेषु भक्तेरिदमङ्गं दृष्टिगतं भवति। आचार्यदीक्षितेन एकतस्तु रामस्य परब्रह्मत्वैश्वर्यादीनि वैशिष्ट्यान्यभिव्यक्तानि, अपरस्तु मोक्षाभिलाषिकविनानेन सूर्यवंशशिरोमणिं रामं प्रति पूर्णशरणागतिरभिव्यक्ता।

**विभुर्ब्रह्माणं यो विरचयति पूर्वं त्रिजगतः**
**समस्तान्यो वेदानपि सपदि तस्मै प्रदिशति।**
**प्रपद्ये देवं त्वां तमहमचिरादात्मधिषणा-**
**प्रकाशं मोक्षेच्छुः शरणमरुणस्यान्वयमणे।।[३५]**

रामाष्टप्रासस्तवेऽपि तेन भक्तकविना अनुप्रासाष्टकमाध्यनेन राघवं प्रति अनन्यशरणागतिर्घोषिता।

**जातो यो मिहिरान्वये नियमिना नीतो मखं रक्षितुं**
**शातोदर्यपि येन गौतममुनेः पूतोपलत्वं जहौ।**
**छातोमापतिकार्मुकं सदसि यं सीतोपलेभे पतिं**
**नातो राघवतः परं शरणमित्यातोघमाघोषये।।[३६]**

वर्णमालास्तोत्रेऽपि कविदीक्षितेन अतिविचक्षणतया दास्यभावोऽयं प्रस्तुतः। सः कथयति, "हे प्रभो! राम! भवान् तु मम स्वामी स्वत एव भवतु। अहन्तु स्वामिनं कथयितुं विभेमि यतो हि एतादृग्वाचि प्रयुक्तायां शूर्पणखा भवता नासिकाविहीना कृता।[३७] पद्येऽस्मिन् रामं प्रति कवेः समर्पणम् अनन्यशरणागतिश्च प्रकटिते स्तः।"

अत्र कविना दास्यभक्तिमाध्यमेन इदमप्युदीरितं यत् सः तु स्वकीयस्योपास्यस्य रामस्य दास अत एव रामः स्वयमेव सर्वथा स्वकीयस्यास्य भक्तस्य पालकः रक्षकश्च।

सख्यभक्तिरपि महत्त्वपूर्णा। सख्युर्भावः सख्यमिति शब्दस्यास्याभिप्रायोऽस्ति मित्रता घनिष्ठता च।[३८] रामभद्रदीक्षितेन स्वकीयेषु स्तोत्रेषु भगवता रामेण सार्धं घनिष्ठतामाश्रित्यैव नैके भावाः प्रस्तुताः।

**जनाः संसाराब्धिं जननमरणोल्लोलजटिलं**
**तरन्ति ध्यायन्तस्तव वरद यत्पादयुगलम्।**
**अहल्यामाचारस्खलनकृतदुःखादुदधर-**
**त्सकृत्तस्य स्पर्शो यदि कथमिदं विस्मयपदम्।।**[39]

**आत्मार्पणम्**

ईश्वरसंरक्षितपुरुषस्य कर्मफलेषु कर्तृत्वाभावः, ईश्वरं प्रति तस्य फलस्य समर्पणञ्च आत्मार्पणम् आत्मनिक्षेप वा अभिधीयते।[40] भक्तिमार्गे आनुकूल्यस्य सङ्कल्पः, प्रातिकूल्यस्य वर्जनम्, ईश्वरः रक्षिष्यतीति विश्वासः, गोप्तृत्ववरणम्, आत्मनिवेदनं कार्पण्यञ्चेति शरणागतेर्यद्यपि षड्रूपाः भवन्ति[41] तथापि सर्वेष्वेतेषु आत्मार्पणं प्रामुख्यं भजते, अङ्गित्वेन विराजते च यतो हि प्रकारेऽस्मिन् भक्त ईश्वरं प्रति पूर्णरूपेण समर्पितः भवति। एतदतिरिक्तं अन्ये प्रपत्तिप्रकाराः अङ्गत्वेन स्वीकृतास्सन्ति।[42] आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते।[43] आत्मार्पणमिदं आत्मन्यासात्महविसात्मसंन्यासात्मत्यागात्मनिक्षेपादिशब्दैरप्यभिधीयते। स्वरूपफलोपा-यात्मकमात्मार्पणमेव वास्तविकी शरणागतिः।

रामभद्रस्तोत्रेषु आत्मार्पणत्रयमिदं दरीदृश्यते। जीव ईश्वरस्यैवांशः। यदा जीवोऽपि न स्वरूपतः स्वतन्त्रः तदा कथं किमपि वस्तु तस्य भवितुं शक्नोति इत्यनुसन्धानं स्वरूपात्मार्पणं कथ्यते।

वर्णमालास्तोत्रे एकस्मिन् पद्ये आत्मानं भगवतो रामस्यांशं स्वीकुर्वता कविदीक्षितेनोक्तं यत् कविरपि भगवता रामस्यैवाबोधः बालक इतिकृत्वा भगवता स्वकीययोः पुत्रयोः कुशलवयोरिव भक्तेऽस्मिन्नपि पुत्रत्वं स्वीकरणीयम्। अनेनाचारेण भगवन्तं मनसागोचरं कथयन्ती श्रुतिरपि व्यर्था भविष्यति।

**डिम्भस्तवास्मि रघुवीर तथा दयस्व**
**लभ्यं यथा कुशलवत्वमपि क्षितौ मे।**
**किञ्चिन्मनो मयि निधेहि तव क्षतं किं**
**व्यर्था भवत्वमनसं गृणती श्रुतिस्त्वाम्।।**[44]

अत्र तु भक्तकविः "आत्मा वै जायते पुत्रः" इति शब्दप्रमाणमाश्रित्य एकत आत्मानमीश्वरांशत्वेन प्रस्तुतवान् अपरतस्तु प्रस्तुतिमिमामवलम्ब्य पितृपुत्रसम्बन्धिनी भक्तिरपि तेन निरूपिता।

फलरूपात्मार्पणं रामभद्रदीक्षितस्तोत्रेषु यत्र तत्र दृष्टिगतं भवति। प्रकारेऽस्मिन् भक्तेन स्वकीयं फलस्वामित्वमपि नैव स्वीकृतमपितु ईश्वर एव कर्मणां फलभोक्ता

स्वीक्रियते।

**भवानन्तर्यामी रघुवर यथा प्रेरयति मां**
**तथैवाहं कुर्वे तदिह मम पापं क्व भवतु।**
**अथापि स्यादेतद्यदि करुणया तत्प्रणुद मे**
**नमस्ते दीनानां शरणद नमस्ते पुनरपि।**[४५]

उपायारूपात्मार्पणं रामभद्रदीक्षितस्य स्तोत्रेषु प्रस्फुटितमस्ति। कविदीक्षितानुसारं भक्तेरुपायकर्ता मार्गदर्शकः प्रेरकश्च ईश्वर एव। स ईश्वरः भक्तेन पूर्णसमर्पणपूर्वकमेव प्राप्तुं शक्यते भवतु नाम भक्तिमार्गः ज्ञानरूपः, तपोरूपः उत वा प्रपत्तिरूपः। सन्दर्भेऽस्मिन् भक्तकविना दीक्षितेन कथ्यते यत् सः तु ईश्वरं प्राप्त्यर्थं एकमपि मार्गं नैव जानाति। केवलं भगवतः कृपयैवासौ तं द्रष्टुं समर्थो भवति यथा शिवधनुर्भङ्गावसरे परशुरामे क्रुद्धे सति रामेण स्वकीयया कृपयैव परशुरामं स्वकीयं ब्रह्मत्वं ज्ञापितम्।[४६] भावोऽयम् अपरस्मिन् घोषितः यद् स्वकीयं दर्शनं प्रापयितुं भगवानेव मूलम्।

**पर्याकुलोऽस्मि किल पातकमेव कुर्वन्-**
**दीनं ततः करुणया कुरु मामपापम्।**
**कर्तुं रघूद्वहनदीनमपापमुर्व्यां**
**शक्तस्त्वमित्ययमपैति नु लोकवादः।।**[४७]

अनेनप्रकारेण रामभद्रदीक्षितस्य स्तोत्रेषु नवधाभक्तेः सर्वे प्रकाराः प्रस्तुतास्सन्ति ये प्रकारान्तरेण शरणागतेष्षड्रूपाणां प्रकाशका अपि। भक्तिमार्गे नवधाभक्तिमतिरिच्य अन्यान्यपि कतिपयान्यावश्यकाङ्गानि येषां महद्योगदानं मोक्षस्य उपायत्वेन। तत्त्वानामेषामन्तर्गतं गुरुः, निरभिमानिता, सत्सङ्गः, कामक्रोधमत्सरादिभावानां परित्यागः, अहिंसेत्यादीनां परिगणयितुं शक्यन्ते। रामानन्दसम्प्रदायानुसारं मुमुक्षुवैष्णवभक्तेन समस्तसंशयच्छेत्ता, सदाचारविरतः श्रेष्ठश्च गुरुराश्रयणीयः। तेन निरभिमानपूर्वकं स्वगुरूपदिष्टः मन्त्र एव जाप्यः तस्य महात्मनश्च आज्ञापि निरहंकारपूर्वकं पालनीया च।[४८] आचार्यदीक्षितेन 'आचार्यस्तवराजभूषणम्' इत्याख्ये स्तोत्रे स्वकीयस्य वेदान्तगुरोः कृष्णानन्दमुनीश्वरस्य चरणकमलयोर्वन्दना कृतास्ति।[४९] तेनोदीरितम् यत् तस्य गुरुः सर्वशास्त्रज्ञः, कविः, असूयारहितः अध्यात्मपरायणश्चास्ति। एतादृशस्य गुरोर्वर्णने कः समर्थः। गुरुतत्त्वन्तु वर्णनातीतम्।

स्तोत्रात्मकपद्यैः कविना एतदपि निगदितम् यत्कामक्रोधलोभादिवशीभूतः मनुष्यः भगवन्तं कदापि न प्राप्नोति, न च सः मुक्तिमपि लभते। मुमुक्षुः दीक्षितकवी रामं निवेदयति यदुपास्यस्य रामस्य कृपया भक्तदीक्षितस्य सर्वे विकाराः

पूर्णतया अपसर्पन्तु।[५०]

रामभद्रदीक्षितस्य स्तोत्रेषु नवधाभक्त्यतिरिक्तं मोक्षोपायत्वेन भगवच्छरणागतिरपि सुष्ठ प्रतिपादितास्ति या प्रकारान्तरेण एकतस्तु सत्यवादिताशुद्धाचरणसमदर्शिता-सत्सङ्गतित्यागाहिंसादिसात्त्विकतत्त्वानाममनुमोदनं करोति अपरतस्तु मोहक्रोधमत्सरा-सत्यवचनघृणाद्वेषहिंसादिप्रतिकूलविषयाणां परित्यागं प्रस्तौति। वस्तुतस्तु मनसि क्षोभकारकान्येतानि प्रतिकूलतत्त्वानि भगवत्प्राप्ते: बाधकानि अत: त्याज्यान्येतानि सर्वथा।

रामभद्रदीक्षितस्तोत्रेषु नवधाभक्तिमाध्यमेन जीवभगवतो: विविधसम्बन्धा अपि अभिव्यक्तास्सन्ति। एषु सम्बन्धेषु दास्यभक्तिमाश्रित्य, सेव्यसेवकसम्बन्ध-स्वामिसेवकसम्बन्धरक्ष्यरक्षकसम्वन्धशेषीशेषसम्बन्धाधाराधेयसम्बन्धपितृपुत्रसम्बन्धाख्या: षट्सम्बन्धा: प्रामुख्येन प्राप्तास्सन्ति। दास्यभक्तिप्राधान्यात् रामभद्रदीक्षितस्य स्तोत्रेषु भगवत्कैङ्कर्येऽपि महद् बलं प्रस्तुतम्। मोक्षस्य कर्मज्ञानभक्तीतिसाधनत्रयेषु असामर्थ्यात् जीवोऽकिञ्चन: कथ्यते। ईश्वरं प्रति स्वकीयस्य गर्वहानि: साधनहीनतायाश्च निवेदनं कार्पण्यं अथवा कैङ्कर्यमुच्यते।[५१] कैङ्कर्यस्य व्यावहारिकं रूपं द्वयात्मकं–प्रथमं भगवदर्चावतारस्य पञ्चोपचारपूर्वकं षोडशोपचारपूर्वकं वा अवहितचेतसा सेवनम्, द्वितीयन्तु अहङ्कारं निरास्य भगवत: प्रार्थना। स्तोत्रेष्वेतेष्वाचार्यदीक्षितस्य तुलनात्मकदृष्ट्या कैङ्कर्यस्य द्वितीयस्वरूपं प्रस्तुतम्। आत्मानं बद्धजीवत्वेन स्वीकुर्वत: कवेरस्य कथनमस्ति यत् पुर्यष्टकैष: सूक्ष्मशरीरोऽपि भगवता रामेण स्वकीयैरलौकिकैरसीमितगुणै: विनाशनीय: तदैव संसारस्य कवी रामभद्रदीक्षित: आवागमनान् मुक्तं भवितुं शक्नोति।[५२] कवेरनुसारं केवलमीश्वर एव भक्तस्य सर्वानपराधान् क्षन्तुं समर्थ: यतो हि ईश्वरस्य सहधर्मिणी प्राचीना वधू: पृथ्वी 'क्षमा' इति नाम्नाभिहिता सती सर्वंसहास्ति इति कृत्वा तदपृथक्सिद्धिकारणात् ईश्वरोऽपि गुणेनेतेन संयुक्तोऽस्ति।[५३] न केवलम् एतावदेवापितु तस्य अपरा वधू: लक्ष्मी: कमलासनास्ति कवेर्हृदयमपि च कमलरूपम् अत एव तदपि भगवन्निवासायोग्यं भवितुमर्हति।[५४]

अनेन प्रकारेण रामभद्रदीक्षितस्य स्तोत्रेषु नवधाभक्ति: विशदं प्रतिपादिता सर्वेष्वेतेषु भक्तिप्रकारेषु रघुवंशी च राम एव कवेरुपास्य: भक्तिरसस्यालम्बनविभावश्च। कतिपयेषु स्तोत्रेषु रामस्य चापबाणतूणीराद्यायुधान्यपि शक्तिसम्पन्नत्वात् सामर्थ्याच्च भक्तिरसस्य आलम्बनविभावत्वेन विराजन्ते नैकालौकिककार्यसामर्थ्यं पापाहारिसामर्थ्यं मोक्षप्रदानसामर्थ्यञ्चैतेषामायुधानामुद्दीपनविभावत्वेनात्र प्रस्तुतानि सन्ति। बद्धजीवरूपत्वेन भक्तस्य रामभद्रदीक्षितस्य कैङ्कर्यकार्पण्यात्मनिवेदनवन्दनादय अनुभावा हर्षविषाद-दैन्यजडताधैर्यादय: व्यभिचारिणश्च प्रतीयन्ते। एतैस्सर्वैरलौकिकोपादानै: परिपुष्ट: सन् भगवद्रतिरिति स्थायिभाव: भक्तिरसत्वेन चर्व्यमाण: अलौकिकचमत्कार-

कारिरूपेण अभिव्यक्तः।

रामभद्रदीक्षितः न केवलं भगवद्भक्त अपितु साहित्यव्याकरणवेदान्त-दर्शनादिशास्त्राणां नैपुण्यात् बहुश्रुतत्वात् प्रतिभावैशिष्ट्याच्च विद्वानाचार्योऽप्यासीत्। इदमेव कारणं यत्तस्य स्तोत्रेषु भक्तिप्राधान्यादेकत उपास्यं प्रति पूर्णसमर्पणं दरीदृश्यते अपरतस्तु प्रतिभाव्युत्पत्त्यभ्यासैरत्र कारयित्रीभावयित्री इत्युभे प्रतिभे अपि दृश्येते।

---

१. मौलौ निधेहि मुकुटं त्यज बर्हिबर्हं
बाणं गृहाण धनुषा सह मुञ्च वेणुम्।
शाखा मृगैर्विहर संत्यज गोपबाला-
रामो यदूद्वह भव त्वमथाश्रये त्वाम्।

—रामस्तवकर्णरसायनम् १.६२

२. रामभद्राश्रयः साक्षाद्रामचन्द्रो न संशयः।
तत्र कोदण्डतूणीरावात्र दण्डकमण्डलू।।

—रामकर्णामृतम् ४.७५

३. शाण्डिल्यभक्तिसूत्र, १.१.२

४. (क) 'सा त्वस्मिन् परमप्रेमरूपा।। अमृतस्वरूपा च।।

—नारदभक्तिसूत्रम् २,३

(ख) यल्लब्ध्वा पुमान् सिद्धो भवति, अमृतो भवति, तृप्तो भवति। यत्प्राप्य न किञ्चिद्वाञ्छति, न शोचति, न द्वेष्टि, न रमते, नोत्साही भवति।। यज्ज्ञात्वा मत्तो भवति, स्तब्धो भवति, आत्मारामो भवति।।

—वही, ४-६

५. यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।
परित्राणाय साधूनां विनाशाय च दुष्कृताम्।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।

—श्रीमद्भगवद्गीता ४.७, ८

६. अनुग्रहाय जीवानां भक्तानामनुकम्पया।
परव्यूहादिभेदेन देवदेवप्रवृत्तयः।। —लक्ष्मीतन्त्रम् ११.४१

७. नित्योऽज्ञश्चेतनोऽजः सततपरवशः सूक्ष्मतोऽत्यन्तसूक्ष्मो
भिन्नो बद्धादिभेदैः प्रतिकुणपमसौनैकधासूरिवर्यैः।
श्रीशाक्रान्तालयस्थो निजकृतिफलभुक् तत्सहायोऽभिमानी
जीवः संप्रोच्यते श्रीरघुपतिसुमते तत्त्वजिज्ञासुवेद्यः।।

—वैष्णवमताब्जभास्कर १.७

८. आनन्दभाष्य १.४.२३

९. स्वीयप्रवृत्तेस्तु निवृत्तिरिष्टो न्यासोऽथ वेद्योऽपि बुधैः सदैव।
ऐकान्तिकैस्तत्त्वविचारदक्षैः परात्मनिष्ठैः परमास्तिकैस्तैः।।

–वैष्णवमताब्जभास्कर ४.४९

१०. वही ४.१४

११. धनुर्धरस्याशृणुयान्निरन्तरं कथां च गायेत् सुयशोऽङ्कितां मुहुः।
रूपं तदीयं च चराचरात्मकं पश्यन्सतां सङ्गमुदारधीश्चरेत्।।

–वैष्णवमताब्जभास्कर ७.३

१२. शृण्वतः श्रद्धया नित्यं गृणतश्च स्वचेष्टितम्।
कालेन नातिदीर्घेण भगवान् विशते हृदि।। –श्रीमद्भागवतपुराण २.८.४

१३. प्रातर्मध्याह्नसायं कृतशुचिकृतिभिः राममभ्यर्च्य सम्यक्
श्रीमद्रामायणेन प्रतिदिनमखिलैर्भारतेन प्रपन्नैः।
शक्तैरानन्दभाष्यैरथ च शुभतमाचार्यदिव्यप्रवन्धैः
कालक्षेपो विधेयः सुविजितकरणैः स्वाकृतेर्यावदन्तम्।।

–वैष्णवमताब्जभास्कर ८.२

१४. ढक्कां त्वदीययशसामधुनापि शृण्मः
प्राचेतसस्य भणितिं भरताग्रजन्मन्।
सत्ये यशस्तव शृणोति मृकण्डुसूनो–
र्धाताप्यतो जगति कोऽस्तु भवादृशोऽन्यः।।

–वर्णमालास्तोत्र, पद्य २९

१५. रामेत्युच्चरितव्यमक्षरयुगं तच्चापि भक्त्या सकृत्–
प्राप्या तेन विमुक्तिरेव यदि तज्जानत्यपि ग्लायसि।
किं वक्ष्ये सुखमास्स्व देवि रसने वश्यौ मम स्तः करौ
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।
सन्तः पातकतूलचण्डपवनं शंसन्ति यत्कीर्तनं
यत्काश्यामुपदिश्य विश्वपतिना मुक्तिर्नृणां दीयते।
यच्चश्रीशसहस्रनामसदृशं यन्नाम तन्निश्चितं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।

–विश्वगर्भस्तव, पद्य १०६, १०७

१६. वाल्मीकिरामायण (युद्धकाण्ड) १८.३३

१७. वर्णमालास्तोत्र, पद्य ३९

१८. (क) देहेन्द्रियप्राणमनोधियां यो जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः।
संसारधमैर्रविमुह्यमानः स्मृत्या हरेर्भागवतप्रधानः।।

–श्रीमद्भागवतपुराण ११.२.४९

(ख) गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च।
सङ्गेन साधुभक्तानामीश्वराराधनेन च।।
श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम्।
तत्पादाम्बुरुहध्यानात् तल्लिङ्गेक्षार्हणादिभिः।।
हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः।
इति भूतानि मनसा कामैस्तैः साधु मानयेत्।।

–वही ७.७.३०-३२

१९. अन्यत्र वासं च गुरूपदिष्टान् मन्त्राञ्जपन्तो ह्यभिमानशून्याः।।

—वैष्णवमताब्जभास्कर ८.५

२०. पदार्थानस्मृत्वा न खलु घटते शब्दरचना
तदिच्छद्भिः स्तोतुं प्रतथमसि चिन्त्यो रघुपते।
स्मृतिस्ते सर्वार्थान्घटयति नृणामित्यपि पुन-
र्विमर्शे किं स्तुत्या तदपि किमपि स्तौमि चपलः।। —रामप्रसादस्तव, पद्य २

२१. जगद्रक्षाहेतोः शतमवतराः सन्ति भवतः
परं त्वेषामेकस्तरलयति चेतो मम भृशम्।
दुरापं योगीन्द्रैरपि सुरपदं यत्र सुलभं
तिरश्चामास्तां तत्तृणतरुशिलानामपि पुनः।। —वही, पद्य ४

२२. रामस्तवकर्णरसायन, १.१

२३. मन्त्राणां व्यापकानां भगवत इह चाव्यापकानान्तु मध्ये
व्यापकः सश्रुतिमुनिसुमतः शिष्टमुख्यैर्गृहीतः।
नित्यानामाश्रयोऽयं परित उरुशुभो रामन्त्रः प्रधानः
प्राप्योऽथ प्रापकश्च प्रचुरतरगुणज्ञानशक्त्यादिकानाम्।।

—वैष्णवमताब्जभास्कर २.२

२४. यावद्वेदार्थगर्भं प्रणवि जगदुदाधारभूतं सविन्दु
प्रव्यक्तं रामबीजं श्रुतिमुनिगदितोत्कृष्टषड्व्याप्तिभेदम्।
रेफारूढत्रिमूर्तिप्रचुरतरमहाशक्तिविश्वोन्निदानं
शश्वत्संराजते यद्विविधसकलसंभासमानप्रपञ्चम्।।

—वही २.३

२५. पितापुत्रत्वसम्बन्धो जगत्कारणवाचिना
रक्ष्यरक्षकभावश्च रेण रक्षकवाचिना।।
शेषशेषित्वसम्बन्धश्चतुर्थ्या लुप्तयोच्यते।
भार्याभर्तृत्वसम्बन्धोऽप्यनन्यार्हत्ववाचिना।।
अकारेणाऽपि विज्ञेयो मध्यस्थेन महामते।
स्वस्वामिभावसम्बन्धो मकारेणाथ कथ्यते।।
आधाराधेयभावोऽपि ज्ञेयो रामपदेन तु।
सेव्यसेवकभावस्तु चतुर्थ्या विनिगद्यते।।

—वैष्णवमताब्जभास्कर २.४-८

२६. वही २.९

२७. गिरां देवी गौरीरमणमकुटोद्भ्रान्ततटिनी-
दुरापाटोपाभिर्भणितिभिरुपास्ते तमनिशम्।
रमा च श्रेयोज्याधनजनसमृद्धा नतजन-
प्रिय स्वामिन्यस्ते कलयति निबद्धाञ्जलि नमः।।

—रामप्रसादस्तव, पद्य ७७

२८. तत्राद्येन पदेन रेण भगवान् सीतापतिः प्रोच्यते
श्रीरामो जगतां गुणैकनिलयो हेतुश्च संरक्षकः।

तच्छेपीपदतोऽप्यतो भगवतोऽनन्यार्हशेषत्वकम्
व्यावृत्तिस्तु सुरान्तरादिगतसत्तच्छेपताया मुहुः।।

२९. विश्वगर्भस्तव, पद्य ९९

३०. वन्दे तमिन्दीवरदामनीलं वन्दारुमन्दारपदारविन्दम्।
रामं सुरामङ्गलकृद्विरामं क्षेमङ्करामन्दशराभिरामम्।।

—रामस्तवकर्णरसायन, २.१

३१. वर्णमालास्तोत्र, पद्य ३१

३२. रामप्रसादस्तव, पद्य १०७

३३. विश्वगर्भस्तव, पद्य १

३४. कर्मप्रत्यूहभङ्गान्नियमिपरिषदो भव्यहव्योपलम्भा-
द्दिव्यानां क्रव्यदानादपि वनपततामुत्तमां प्रीतिमत्ताम्।
प्रायच्छत्ताङ्गकेयप्रमुखमखरिपुक्षोदरूक्षोदयो यो
वन्दे तं देववृन्दस्तुतमुषितमिषुं रामहस्तारविन्दे।।

—रामबाणस्तव, पद्य २६

३५. रामप्रसादस्तव, पद्य ५७

३६. रामाष्टप्रासस्तव, पद्य २५

३७. नम्रस्य मे भव विभो स्वयमेव नाथो
नाथो भव त्वमिति चोदयितुं बिभेमि।
येन स्वसा दशमुखस्य नियोजयन्ती
नाथो भव त्वमिति नासिकया विहीना।।

—वर्णमालास्तोत्र, पद्य ३५

३८. संस्कृतहिन्दीकोश: (शिवरामआप्टे), पृ० १०५५

३९. रामप्रसादस्तव, पद्य १५

४०. तेन संरक्ष्यमाणस्य फले स्वाम्यवियुक्तता।
केशवार्पणर्यन्ता ह्यात्मनिक्षेप उच्यते।।

—लक्ष्मीतन्त्र, १७.७४

४१. षडङ्गं तमुपायं च शृणु मे पद्मसम्भवे।
आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्।।
रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा।
आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः।।

—लक्ष्मीतन्त्र १७.५९-६१

४२. प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरन्विताम्।

—वही, २८.११

४३. वही १७.८०

४४. वर्णमालास्तोत्र, पद्य २८

४५. रामप्रसादस्तव, पद्य १०२

४६. यज्ञेन देव तपसा यदनाशकेन दानेन च द्विजगणैर्विविदिष्यसे त्वम्।
भाग्येन मेऽजनि मृषा तदिदं यतस्त्वां चापग्रहात्परमबुध्यत जामदग्न्यः।।

—वर्णमालास्तोत्र, पद्य ४१

४७. वही, पद्य ३६

४८. तथाविधं प्राप्यमथो सुवैष्णवः सुचिन्तयन्नित्यमनुक्षणं प्रिया।
सदा सदाचाररतं गुरुं वरं ज्ञातं भजेताखिलसंशयच्छिदम्।।

—वर्णमालास्तोत्र, ९.४

४९. श्लाघाकम्पितमौलि जम्भरिपुणा व्रीडालसं वेधसा
साशङ्कं कमलेक्षणेन सरसं चन्द्रार्धचूडेन च।
दृष्टो मूर्ध्नि मया धृतोऽञ्जलिरयं त्रय्यन्तभूषामणेः
कृष्णानन्दमुनीश्वरस्य चरणद्वन्द्वं समालम्बते।।

—आचार्यस्तवराजभूषण, पद्य १

५०. के भृत्याः क इवात्मजाः प्रणयिनी का नाम के भ्रातरः
कौ मातापितरौ च के च गुरवः क्रुद्धस्य पुंसः पुरः।
तत्क्रोधो न भवेद्यथा मम तथा कार्या दयेति ब्रुवं-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।
अग्राह्यं वसु गृह्यते प्रभुरसंसेव्यश्च संसेव्यते
प्राणाश्चेदपि यान्ति यान्त्वतिथये नान्नं पुनर्दीयते।
कुक्षिः स्वोऽपि न पुष्यते यदुदयाल्लोभं तमेवोज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।
विद्याद्येन न चात्मतत्त्वमथ तं मोहं जिहासन्नहं
तस्मै प्राञ्जलिरस्मि दाशरथये जानकीजानये।।
आचारेण च विद्यया च विभवैश्चान्नप्रदानेन च
स्फीतैर्बन्धुजनैश्च किं च यशसा को मेऽस्ति भूमौ समः।
इत्याकस्मिकमुज्झितुं निखिलमप्युत्सेकमभ्युत्सुक-
स्तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।
दातारं कृपणोऽयमित्यकुटिलं जिह्मोऽयमित्युन्नतं
नीचोऽसाविति सर्वशास्त्रकुशलं प्रज्ञाजडोऽसाविति।
इत्थं यो मुखरीकरोति मनुजांस्तं मत्सरं प्रोज्झितुं
तस्मै प्राञ्जलिरस्मि दाशरथये श्रीजानकीजानये।।

—विश्वगर्भस्तव, पद्य ४२-४६

५१. त्यागो गर्वस्य कार्पण्यं श्रुतशीलादिजन्मनः।
अङ्गसामग्र्यसम्पत्तेरशक्तेरपि कर्मणाम्।।
अधिकारस्य चासिद्धेर्देशकालगुणक्षयात्।
उपाया नैव सिध्यन्ति ह्यपाया बहुलास्तथा।।
इति या गर्वहानिस्तद्दैन्यं कार्पण्यमुच्यते।।
शक्तेः सूपसदत्वाच्च कृपायोगाच्च शाश्वतात्।।

—लक्ष्मीतन्त्र १७.६८-७०

५२. दग्ध्वा निशाचरपुरीं प्रथितस्त्वैको
भक्तेषु दानवपुरत्रितयं तथान्यः।

त्वं चाशरासुरसमस्य गुणैः प्रभो मे
पुर्यष्टकप्रशमनेन लभस्व कीर्त्तिम्।।

—वर्णमालास्तोत्र, पद्य ३३

५३. (क) अपृथग्भूतशक्तित्वाद् ब्रह्माद्वैतं तदुच्यते।
तस्य या परमा शक्ति ज्योत्स्नेव हिमदीधितेः।।

—लक्ष्मीतन्त्र २.११

(ख) ब्रह्माद्वैतमिति। स्वापृथक्सिद्धशक्त्यंहताविशिष्टत्वात्
तद्विशिष्टं ब्रह्मैकमेव तत्त्वमित्यर्थः।

—वही (टीका), पृ०–६

५४. क्षन्तुं त्वमर्हसि रघूद्वह मेऽपराधान्सर्वसहा ननु वधूरपि ते पुराणी।
वासालयं च तु न हृत्कमलं मदीयं कान्ता परापि न हि किं कमलालया ते।।

—वही, पद्य ५०

# जातक एवं संहिता-स्कन्धों के आलोक में एक अध्ययन 'प्रश्नमार्ग'

हर्षबाला

वेदाङ्गज्योतिषस्य जातक-संहितेति स्कन्धद्वयम्। तृतीयोऽपि कश्चित् मार्गः प्रश्नमार्गः। एतस्योद्भवस्थानं केरलाः। प्रश्नशास्त्रमपि तावदेवोपादेयं यावज्जातकम्। इदं हि शास्त्रं साध्यं निर्वर्तयितुं मानसिकरूपेण प्रेरणां ददाति। यद्यपि शुभाशुभफलप्राप्तिः पूर्वजन्मक्रियाभिरेव जायते, ज्योतिषं तत्केवलं सूचयति, तथैव प्रश्नशास्त्रमपि तत्कर्म कर्तुं क्षमत इति निरूप्यतेऽत्र लेखे।

वेद के षडङ्गों में ज्योतिषशास्त्र वेदपुरुष की चक्षु-संज्ञा से विभूषित है, "ज्योतिषां सूर्यादिग्रहाणां बोधकं शास्त्रम्" से ज्योतिष शास्त्र की व्युत्पत्ति की गई है। इसका तात्पर्य है कि सूर्यादि ग्रह और काल का बोध करवाने वाले शास्त्र को ज्योतिषशास्त्र कहते हैं[1] इसमें प्रधानतया ज्योतिःपिण्डों की गति, स्थिति के द्वारा पड़ने वाले प्रभाव का विवेचन किया जाता है। आरम्भ में ज्यातिषशास्त्र सृष्टि के विभिन्न रहस्यों को उद्‌घाटित करने वाली विद्या के रूप में प्रचलित था। कालांतर में मानव जीवन पर पड़ने वाले प्रभाव से भूत, वर्तमान एवं भावी शुभाशुभ का फलादेश करना भी इसके अन्तगत समाहित हो गया, इसलिए इसे प्रत्यक्षशास्त्र कहा गया है, क्योंकि यह मानव-जीवन के रहस्यों को उसी प्रकार प्रकाशित करता है, जिस प्रकार दीपक अंधकार में रखी वस्तुओं को प्रकाशित करता है, इसलिए इसे ज्योतिर्विद्या भी कहा जाता है।[2] प्रारंभ में यह शास्त्र सिद्धान्त, होरा एवं संहिता त्रिस्कन्धात्मक रूप में विभक्त था,[3] कालांतर में सिद्धान्त, होरा, संहिता, प्रश्न तथा शकुन के रूप में इसका पंचस्कन्धात्मक विभाजन हो गया, यह शास्त्र प्रमाण व फल के भेद से दो प्रकार का है, इसका गणित स्कन्ध प्रमाण है तथा अन्य स्कन्ध फलात्मक हैं।[4] इस पंचस्कन्धात्मक विभाजन में होरा जातकशास्त्र का ही दूसरा नाम है इसकी उत्पत्ति अहोरात्र शब्द के आदि "अ" तथा अन्तिम "त्र" का लोप करने से हुई है। इसमें जातक के जन्मकालीन ग्रहों की स्थिति के

अनुसार व्यक्ति के जीवन से सम्बन्धित लाभ-हानि, सुख-दुःख, इष्ट-अनिष्ट, उन्नति-अवनति इत्यादि का फलादेश किया जाता है।[५] सिद्धान्त उसको कहते हैं जिसमें त्रुटि से लेकर कल्प के अंत तक के काल की गणना हो, जिसमें सौर, चन्द्र, सावन मास इत्यादि मानों का प्रतिपादन हो[६]। संहिता स्कन्ध उसको कहते हैं, जिसमें ग्रहचार व उदयास्त का फल, सन्ध्यालक्षण, दिग्दाह, भूकम्प, उल्का, वास्तुविद्या, वृक्षायुर्वेद, सामुद्रिक विद्या, रत्नपरीक्षा, काक, श्वान, शृगाल, अश्व इत्यादि की चेष्टाओं से भावी शुभाशुभ का ज्ञान किया जाता है।[७] प्राचीनकाल में प्रश्न संहिता के अन्तर्गत समाहित था, किन्तु उत्तरमध्यकाल (ई. १००१ से ई. १६००) तक इसमें अनेक परिवर्तन व संशोधन हुए, कालांतर में यह भी एक स्वतंत्र शास्त्र के रूप में प्रचलित हो गया। यह प्रश्नकर्ता के प्रश्नाक्षर, प्रश्नलग्न तथा प्रश्नस्वर के आधार पर बिना लम्बी-चौड़ी गणना के तत्काल फल बताने वाला शास्त्र है, पंचस्कन्ध में शकुन शास्त्र को निमित्तशास्त्र भी कहा जाता है। पूर्वमध्यकाल (ई. ५०१ से ई. १०००) तक इसने भी पृथक् स्थान प्राप्त नहीं किया था, किन्तु संहिता के अन्तर्गत ही इसका विषय समाहित था, यह किसी भी कार्य या घटना से पूर्व दिखाई देने वाले लक्षणों के आधार पर फल बताने वाला शास्त्र है।[८] इस प्रकार फलित की अन्य शाखाएँ, जातक, ताजिक, मुहूर्त्त आदि भी ज्योतिष में समाहित हैं। वस्तुतः सृष्टि के समस्त विषय यथा—अन्तरिक्ष विज्ञान, वास्तुविज्ञान, भूविज्ञान, सृष्टिविज्ञान, मौसम विज्ञान इत्यादि, ऐसे अनेक विषय इसमें समाहित हैं और ऐसा लगता है कि इस शास्त्र का इतिहास अब भी पूर्ण रूप से बाहर नहीं आया और भूतकाल के गर्भ में छिपा हुआ है। प्राचीन काल से वर्तमान काल तक इस शास्त्र की उपयोगिता प्रगतिशील रही है, लेकिन सभी शाखाओं में प्रश्नशास्त्र का स्थान सर्वोपरि है, इस शास्त्र की मुख्य विशेषता यह है कि यह विद्या जीवन की मौलिक आवश्यकताओं व समस्याओं के अतिरिक्त आकस्मिक चिन्ताओं व प्रश्नों का समाधान बड़ी सरलता से तत्काल ही करती है, जबकि जातक शास्त्र तात्कालिक प्रश्नों का समाधान करने में अक्षम है। जैसे नष्टवस्तु प्रश्न में चोर कौन है? चोर का रूप, रंग, जाति, नाम, आकृति इत्यादि क्या है? ऐसे प्रश्नों का उत्तर जानना प्रश्नशास्त्र में संभव है, जबकि जातकशास्त्र में लम्बी-चौड़ी गणना के बाद भी सटीक फल ज्ञात नहीं होगा, इसलिए यह विद्या न केवल भारत में बल्कि विश्व के अन्य भागों में भी प्रचलित विद्या है। प्रश्नविद्या जातक व प्रश्नशास्त्र के सिद्धान्तों के अतिरिक्त पृच्छक के अङ्गस्पर्श, चेष्टाओं व क्रियाओं के अतिरिक्त शकुन इत्यादि को भी एक साथ प्रस्तुत करती है। प्रश्न व जातक शास्त्र एक समान लगते हुए भी दोनों में कुछ वैषम्य भी है। प्राचीन मनीषियों प्रभृति, पाराशर[९], कालिदास[१०], व्यङ्कटेश[११] एवम्

प्रश्नमार्गकार[१२] के अनुसार दोनों शास्त्र अभिन्न हैं, किन्तु फिर भी दोनों की अपनी-अपनी विशेषता है और प्रश्नकुण्डली जन्मकुण्डली की सहायक के रूप में मानी जाती है। जब कोई घटना जन्मकुण्डली में प्रत्यक्ष हो और प्रश्नकुण्डली में उसकी पुनरावृत्ति हो तो उस घटना का घटित होना निश्चित है, क्योंकि दोनों कुण्डलियाँ उसे दर्शाती हैं। किन्तु फिर भी प्रश्नशास्त्र सर्वोपरि एवं सर्वमान्य विद्या है और इस शास्त्र का क्रमबद्ध इतिहास हमें वराहमिहिर के समय में मिलता है, यद्यपि इससे पूर्ववर्त्ती ग्रन्थों में यथा–गर्गसंहिता, बादरायणसंहिता इत्यादि में भी इसके सिद्धान्तों की चर्चा की गई है। वराहमिहिर के प्रसिद्ध ग्रन्थ दैवज्ञवल्लभा से इस शास्त्र के विकास की परम्परा शुरू हुई और उनके पुत्र पृथुयशा एवं टीकाकार आचार्य भट्टोत्पल ने क्रमशः षट्पंचाशिका एवम् प्रश्नज्ञान की रचना से इस परम्परा को आगे बढ़ाया।[१३] केरल में प्रश्नशास्त्र का अत्यधिक विकास हुआ और प्रश्न सम्बन्धी अनेक प्रश्न लिखे गए। केरल – साहित्य के इन्हीं प्रश्नग्रन्थों की शृंखला में प्रचलित प्रश्नग्रन्थ प्रश्नमार्ग है। जिसका उत्तरी व दक्षिणी भारत में खूब प्रचार-प्रसार हुआ है। यद्यपि प्रश्नमार्ग का लेखक अज्ञात है और लेखक ने ग्रन्थ में कहीं भी अपने नाम का उल्लेख नहीं किया है तथापि कुछ विद्वानों के द्वारा लेखक का नाम विष्णु, नारायण, कृष्ण, माधव, गोविन्द, दामोदर, ऋषिकेश, पद्मनाभ, मुरारी इत्यादि होने की संभावना की गई है।[१४] के. महादेव शास्त्री ने लेखक का नाम परमेश्वर माना है[१५] जबकि मतान्तर ने स्पष्ट किया है लेखक का नाम परमेश्वर नहीं है।[१६] बहुमतानुसार लेखक का नाम विष्णु ही है, ऐसा मानने के अन्य कारण भी हो सकते हैं। प्रथम लेखक एक नम्बूदरी ब्राह्मण था और नम्बूदरी परिवार एक विष्णु - मन्दिर के निकट ही रहता था, संभवतः लेखक विष्णु- मंदिर का पुजारी या तांत्रिक रहा होगा, दूसरा इनके पिता ने ही अपने इष्टदेव विष्णु के नाम पर पुत्र का नाम रखा हो, तीसरा लेखक ने एक घटना के अनुसार अपने कट्टरविरोधी ईश्वरदीक्षित को "ईश्वरपक्षपातम्" तथा स्वयं को "विष्णुभक्त" नाम से संबोधित किया था, संभवतः यहाँ ईश्वर शब्द अपने विरोधी का तथा विष्णु शब्द स्वयं लेखक के नाम का संकेत करते हैं।[१७] प्रश्नमार्ग के लेखक के गुरु का नाम "मुरारी" पिता का नाम "महादेव" और माता का नाम "श्री" था।[१८] लेखक का जन्मस्थान केरल प्रान्त के तेल्लीचरी और कन्नौर के बीच एटक्वारा (Eddakkad) नामक विष्णु क्षेत्र स्वीकार किया गया है।[१९] एटक्वारा का पूर्ववर्त्ती नाम मध्याटवी था, मध्याटवी एक संस्कृत शब्द है जिसका अर्थ है "मध्य जंगल" उसी प्रकार Eddakkad या एटक्वारा मलयालम शब्द है, जिसका अर्थ "मध्यजंगल" है।[२०] अतः यह निश्चित ज्ञात होता है कि लेखक Eddakkad का ही निवासी था। केरल बिब्लियोग्राफी[२१] के अनुसार लेखक का

काल सन् १९२५-१७२५ तथा प्रश्नमार्ग का रचनाकाल सन् १६४९-१६५० स्वीकार किया गया है। एम. रामाकृष्ण भट्ट ने लेखक का जीवनकाल ८०० से ८७० कोलम् संवत् तथा १६२४ से १६९४ ईस्वी स्वीकार किया है।[२२]

उपर्युक्त सभी साक्ष्यों से सन् १६४९-५० या ८२५ कोल संवत् ही प्रश्नमार्ग का रचनाकाल सिद्ध होता है। कोल संवत् केरल का संवत् है, इस संवत् के प्रारम्भ से ही केरल का नया वर्ष प्रारम्भ होता है। यह सौर गणना पर आधारित वर्ष है, जिसका प्रारम्भ निरयण सूर्य के सिंह राशि में प्रवेश - उपरान्त होता है, इस नववर्ष को मलयालम में सिंहादि कहा जाता है, इस संवत् के प्रारंभ में ही धान की फसल तैयार होती है।[२३] अतः अनेक साक्ष्यों के आधार पर ८२५ कोल संवत् प्रश्नमार्ग का काल सिद्ध होता है। प्रश्नमार्ग मौलिक रूप से मलयालम लिपि में लिखा गया ३२ अध्यायों में विभाजित केरल के भारत विलास प्रेस से छपा ग्रन्थ है।[२४] जो दक्षिण के केरल, तमिलनाडु और कर्नाटक इत्यादि क्षेत्रों में शीघ्र ही प्रसिद्ध हो गया, यद्यपि इसकी मलयालम के अतिरिक्त कन्नड़, तमिल, तेलगू लिपियाँ भी मिलती हैं। जिसके आधार पर प्रश्नमार्ग के अनुवाद व संस्करण प्रकाशित किए गए हैं। न्यू कैटालोगस कैटालोगोरम[२५] के अनुसार २९ हस्तलिखित व प्रकाशित संस्कृत पाण्डुलिपि सूचीपत्रों के आधार पर ७९ प्रश्नमार्ग की मलयालम तथा देवनागरी पाण्डुलिपियों की संकेतात्मक जानकारी मिलती है।

प्रश्नमार्ग की प्रकाशित व उपलब्ध और अप्रकाशित और अनुपलब्ध टीकाओं की भी जानकारी मिलती है प्रश्नमार्ग की पाण्डुलिपियों के आधार पर प्रश्नमार्ग के पूर्वार्द्ध पर नीलकण्ठ शर्मा द्वारा सर्वप्रथम संस्कृत टीका लिखी गई, जो १९२६ में त्रिचूर के मंगलोदय प्रेस से[२६] मतान्तर से Phalghat से छपी[२७] थी, जिसकी प्रति Oriental Library Madras में सुरक्षित है,[२८] बी.वी. रमन ने इस टीका की सहायता से ही अंग्रेजी व्याख्या प्रस्तुत की है। विद्याकल्पतरु प्रेस से १८९० में प्रश्नमार्ग के पूर्वार्द्ध पर वलिया कोकून तामपुरा के द्वारा लिखित मलयालम व्याख्या प्रकाशित हुई थी, जिसकी जानकारी British Museum के मलयालम सूचीपत्र से प्राप्त हुई है। इस टीका का सम्पादन वेङ्कटला शास्त्री ने किया है।[२९] उपर्युक्त टीकाओं के प्रकाशित होने के अनन्तर भी प्रश्नमार्ग के ३२ अध्यायों का पूर्ण पाठ शुकदेव चतुर्वेदी जी द्वारा देवनागरी में अनुवादिक रंजन पब्लिकेशन्स से प्रकाशित १९७७ का संस्करण प्रस्तुत किया गया, जिससे यह शीघ्र ही उत्तर भारतीयों के लिए भी सरलता से उपलब्ध हो गया, यह प्रथम संस्करण तीन खण्डों में विभाजित किया गया था। इसी के साथ ही देवनागरी से अनुवादित जे.एन. भसीन कृत अंग्रेजी अनुवाद भी प्रस्तुत किया गया है। यद्यपि

वर्तमान में जे.एन. भसीन कृत अंग्रेजी अनुवाद का प्रकाशन समाप्त हो गया है। इसके अनन्तर बी.वी. रमन ने दो स्थानों से प्राप्त प्रश्नमार्ग की पाण्डुलिपियों से प्रश्नमार्ग का अंग्रेजी अनुवाद प्रस्तुत किया, जिसे ओरियण्टल लाइब्रेरी मद्रास से प्राप्त पाण्डुलिपि से प्रथमखण्ड तथा द्वितीयखण्ड का अनुवाद दो लिपियों से किया एक ओरियण्टल लाइब्रेरी से प्राप्त तेलगू लिपि से, दूसरी ओरियण्टल लाइब्रेरी मद्रास से प्राप्त कन्नड़ लिपि से किया, जो मोतीलाल बनारसीदास, बैंगलोर तथा दिल्ली से प्रकाशित क्रमशः १९८० और १९८५ में प्रस्तुत किया गया संस्करण है।[३०] इसके पश्चात् गुरु प्रसाद गौड़ कृत पाथेय हिन्दी टीका, चौखम्बा सुरभारती वाराणसी से प्रकाशित सन् २००७ का संस्करण प्राप्त होता है। यह मूलतः कन्नड़ लिपि से रूपान्तरित देवनागरी में तैयार किया गया है।[३१] उपर्युक्त के अतिरिक्त एम.ई. मुथ्थुस्वामी कृत प्रश्नमार्गम् नामक प्रश्नमार्ग पर चार खण्डों में मलयालम व्याख्या भी प्राप्त होती है।[३२] उपर्युक्त प्रकाशित टीकाओं के अतिरिक्त प्रश्नमार्ग पर लिखी गई अप्रकाशित व अनुपलब्ध टीकाओं की जानकारी भी मिलती है। जिनमें प्रथम दुर्गमाऽर्थप्रकाशिनी स्वयं लेखक द्वारा गद्य में लिखी गई, प्रश्नमार्ग व्याख्या नामक मलयालम टीका है।[३३] Kaikulangara Rama Warrier के द्वारा रत्नशिखा नामक मलयालम टीका लिखी गई है, लेकिन यह अप्राप्त है।[३४] नीलकण्ठ शर्मा कृत मलयालम उपरत्नशिखा नामक टीका अनुपलब्ध है।[३५] श्री कब्याड़ी श्री निवासाचार्य कृत प्रश्नमार्ग पर कन्नड़ टीका भी लिखी गई है, लेकिन यह भी अनुपलब्ध है।[३६]

प्रश्नमार्ग की विषयवस्तु को ३२ अध्यायों में विभाजित किया गया है। जिसमें न केवल प्रश्नशास्त्र की विधियों से बल्कि जातकशास्त्र के सिद्धान्तों की सहायता से फलादेश किया गया है। इसके अतिरिक्त वर्तमान में अप्रचलित व अनुपलब्ध विधियों का स्वरूप व फलादेश तथा महत्त्व भी इस ग्रन्थ में प्रतिपादित किया गया है। इस विषय वस्तु में सर्वप्रथम मंगलाचरण, गुरु, इष्टदेव, ग्रहों की स्तुति, वेदाङ्ग का परिचय, ज्योतिषशास्त्र के स्वरूप का परिचय दिया है तथा अन्य विषयों में ज्योतिषशास्त्र के अधिकारी व दैवज्ञ के लक्षण व कर्त्तव्य, पृच्छक के लक्षण व कर्त्तव्य, प्रश्नकालीन विचारणीय समय, स्थान, स्वर, अङ्गस्पर्श, वस्त्र, दृष्टि, शकुन, आरूढ़ दिशा इत्यादि का विविध प्रश्नों में शुभाशुभ फलादेश, प्रश्न – फलकथन की दक्षिण भारतीय विविधाँ यथा– अष्टमङ्गल विधि, आरूढ़ लग्न, छत्रलग्न, वीथी राशि, ताम्बूल व दीपक से फलकथन, सूत्रपद्धति, त्रिस्फुट, पंचस्फुट, सूर्येन्दुराहुचक्र, प्राण, मृत्यु, देह, अप्रकाशक ग्रह इत्यादि से शुभाशुभ फलकथन तथा प्रश्नशास्त्र के मुख्य तीन सिद्धान्तों में समाहित विधियों से विविध प्रश्नों का फलकथन किया गया है।

प्रश्नमार्ग में जीवन की मूलभूत आवश्यकताओं से सम्बन्धित मौलिक प्रश्नों यथा–आयु, विवाह, सन्तान, धन, रोग, देव पीड़ा, मृत्यु इत्यादि प्रश्नों के छोटे से छोटे पहलू का विवेचन विस्तार से किया गया है। यथा–रोग–प्रश्न में रोग–निर्धारण, रोग के भेद, रोग के कारण, रोगारम्भ, रोग की समाप्ति, साध्य–असाध्य रोग, मृत्यु का कारण, रोग तथा रोग–निवारण की औषधियाँ व रोग की शान्ति के उपाय इत्यादि प्रतिपादित किए गये हैं। ग्रन्थकार ने न केवल जातक व प्रश्नशास्त्र बल्कि ज्योतिषशास्त्र की समस्त शाखाओं को अपना विषय बनाया है तथा मूल समस्याओं के अतिरिक्त आकस्मिक व तात्कालिक समस्याओं व प्रश्नों यथा–मूक प्रश्न, नष्टवस्तु, राज, धन, कूप, वर्षा, नष्टजातक, इत्यादि प्रश्नों का भी सूक्ष्म अध्ययन अन्यग्रन्थमतानुसार किया है। प्रश्नमार्ग के सम्पूर्ण अध्ययन से ज्ञात होता है कि यह एक संकलन ग्रन्थ है, जिसमें ग्रन्थकार ने अपने पूर्ववर्त्ती ग्रन्थकारों के मतानुसार विषय स्पष्ट किया है। जिसमें मुख्य है– षट्पंचाशिका, बृहत्संहिता, बृहज्जातक, कृष्णीयम्, सूर्यसिद्धान्त, जातकपारिजातक, सारावली, रणदीपिका, विद्वज्जनवल्लभा, सन्तानदीपिका, आचारसंग्रह, प्रश्नज्ञान इत्यादि। जिनमें से कुछ ग्रन्थ आज अनुपलब्ध हैं। यह ग्रंथ प्राचीन पारम्परिक ज्योतिष मूल्यों की पुष्टि ही नहीं करता, बल्कि नए तथ्य भी प्रस्तुत करता है, जो प्रसिद्ध ग्रन्थ बृहज्जातक में भी नहीं मिलते। अपनी विशेषताओं के कारण अनेक नूतन आविष्कारों व नए सिद्धान्तों के सृजन के अनन्तर भी प्रश्नमार्ग की गुणवत्ता अक्षुण्ण रहेगी। प्रश्नशास्त्रीय ग्रन्थ प्रश्नमार्ग प्रतियोगिता – प्रधान युग में प्रश्नशास्त्र की उपयोगिता प्रस्तुत करता है। प्रश्नशास्त्र की उपयोगिता वर्तमान में सर्वमान्य है। आधुनिक युग में पीड़ित मनुष्य के लिए यह एक मार्गदर्शक के रूप में उपयोगी शास्त्र है। प्रश्नशास्त्र इसलिए भी महत्त्वपूर्ण है, क्योंकि इसमें पृच्छक या जिज्ञासु को जन्मकाल का ज्ञान हो ऐसा कोई बन्धन नहीं होता है। बल्कि पृच्छक केवल प्रश्न के आधार पर अपनी चिन्ताओं का समाधान जान सकता है।

अतः सम्पूर्ण अध्ययन से यह स्पष्ट कहा जा सकता है कि प्रश्नशास्त्र भी उतना ही उपयोगी शास्त्र है, जितना जातक शास्त्र। प्रश्नशास्त्र का महत्त्व मनुष्य– जीवन में इसलिए भी है कि वह जिज्ञासु को वर्तमान में पुरुषार्थ – साध्य कर्म करने के लिए मानसिक रूप से प्रेरणा भी देता है। प्रश्नशास्त्र यह स्पष्ट बताता है कि इस जन्म के लिए क्रियमाण या करिष्यमाण कर्म का फल प्राप्त हो रहा है। वास्तव में शुभाशुभ की प्राप्ति का कारण तो मानव के पूर्वजन्म में किए गए कर्मों का ही चक्र हैं ज्योतिष तो केवल उसे सूचित ही करता है। अतः जो ज्योतिषशास्त्र का प्रयोजन है, प्रश्नशास्त्र भी उसे पूर्ण करने में सार्थक है।

---

१. शास्त्री, नेमिचन्द्र - भारतीय ज्योतिष, भारतीय ज्ञानपीठ, ३० संस्करण २०००, दिल्ली, पृ१७

२. चतुर्वेदी, शुकदेव - ज्योतिष शास्त्र में रोग विचार, मोतीलाल बनारसीदास, दिल्ली, पटना, वाराणसी, मद्रास, प्राक्कथन

३. शास्त्री, नेमिचन्द्र - भारतीय ज्योतिष, भारतीय ज्ञानपीठ, दिल्ली, २०००, पृ. १८

४. प्रमाणफलभेदेन द्विविधं च भवेदिदम्।
प्रमाणं गणितस्कन्धः स्कन्धावन्यौ फलात्मकौ।।
– प्र. मा. १/९ चतुर्वेदी, शुकदेव, रंजन पब्लिकेशन्स, दिल्ली १९७७

५. शास्त्री, नेमिचन्द्र - भारतीय ज्योतिष, भारतीय ज्ञानपीठ, ३० संस्करण, दिल्ली, २०००, पृ १९

६. त्रुट्यादिप्रलयान्तकालकलनमानप्रभेदस्तथा।
चारश्च धुसदां द्विधा च गणितं प्रश्नस्तथा सोत्तराः।।
भूधिष्ण्यग्रहसंस्थितेश्च कथनं मन्त्रादियत्रोच्यते
सिद्धान्तः स उदादतोऽत्र गणितस्कन्धप्रबन्धे बुधैः।।
सि.शि., भास्कराचार्य, चौखम्बा संस्कृत सीरिज, वाराणसी, १९५८, १/६-७

७. बृ.सं., वराहमिहिर, हिन्दी टीका - अच्युतानन्द झा, सुरेशचन्द्र मिश्र, चौखम्बा विद्याभवन, वाराणसी, १९८३ पृ. ५.

८. शास्त्री, नेमिचन्द्र - भारतीय ज्योतिष, भारतीय ज्ञानपीठ, ३०वाँ संस्करण, दिल्ली, २०००, पृ. १८-२१

९. जन्मलग्नं समासाद्य यद्यप्रोक्तं तु जातके।
तत्सर्वं प्रश्नलग्नेन प्रश्नकालाद् वदेद् बुधः।
बृ.पा., पाराशरमुनि, व्याख्या-सुरेशचन्द्र मिश्र, रंजन पब्लिकेशन्स, दिल्ली, १००/१९

१०. एवं जन्मखगोदयः फलमिदं सर्वं वदेज्जातके।
तन्नो चेदथ जन्मपत्रमपि वा तत्प्रश्नलग्नाद्वदेत्।।
प्रश्नो जातकतुल्य एव न भवेद् भेदोऽथवा दुर्दिने।
न ज्ञाते घटिकादिके गृहनवांशादींश्च पृच्छाद्वदेत्।।
उ.का., कालिदास, रंजन पब्लिकेशन्स, दिल्ली, २००७, ७/१

११. यज्जातके निगदितं भुवि मानवानां। तत्प्रश्नकेऽपिसकलं कथयामि तज्ज्ञाः।
प्रश्नोऽपि जन्म भवति प्रभेदः प्रश्नस्य चात्र न कश्चिदस्ति।।
सं.चि, व्यङ्कटेश, सागर पब्लिकेशन्स, दिल्ली, २००२, १/५

१२. बुध्वा शास्त्रं यथान्यान्यं बलाबलविधानतः
यथोक्तं जातके सर्वं तद्वत् प्रश्नेऽपि चिन्तयेत्।।
प्र.मा., व्याख्या-शुकदेव चतुर्वेदी, रंजन पब्लिकेशन्स, दिल्ली, १९७७, १/४५

१३. वही, प्रस्तावना।

14. It might be argued that should the author's name be a synonym of Nārāyaṇa, Govinda, Damodara, Hṛṣikesa, Padmanābha. Murārī etc. and not Vishṇu is particular.
Bhatt M. Rama Krishna - Essentials of Horary Astrology or Prasnapadavi, Motilal Banarasidass Publishers, Delhi - 1992. Pg. XVI.

15. The Praśnamārga by a Nambudiri of the Panna Kattu Family, Possibly Named Parameshwara.
Sharma. K.V. - A History of the Kerala School of Astronomy of Hindu Astrology, Punjab University, Hosiarpur, First Edition. 1972. Pg. 37, 67.
16. Veezhinathan. N. - The New Catalogue Catalogorum, Vol. 13, p. 101, Department of Sanskrit, University of Madras, 1991.
17. Bhatt M. Ramakrishna - Essentials of Horary Astrology of Prasnapadvi, Motilal Banarasidass Publishers, Delhi - 1992. Pg. XVI.
18. Ibid, Pg. XV
१९. प्र.मा., व्याख्या-शुकदेव, चतुर्वेदी, रंजन पब्लिकेशन्स, दिल्ली, १९७७, प्रस्तावना।
20. Website - Google-Map of Kerala, Encyclopaedia Index (pg. 1-3)
21. Sharma, K.V. - A History of Kerala School of Hindu Astronomy, Punjab University, Hosiarpur, 1972, Pg. 66, 67
22. The author's life period was between 800 and 870 of the Kollam (era 1624 and 1694 Ad.)
Bhatt M. Ramkrishna - Essentials of Horary Astrology of Prasnapadavi, Pg. XV, Motilal Banarasidass, Delhi, 1992
२३. प्र.मा.ए व्याख्या - गुरु प्रसाद गौड़, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २००७, भाग-१, प्रस्तावना।
२४. प्र.मा., व्याख्या - शुकदेव चतुर्वेदी, रंजन पब्लिकेशन्स, दिल्ली, १९७७, प्रस्तावना।
25. Veezhinathanm N.- The New Catalogue Catalogorum, Vol. 13, Department of Sanskrit, University of Madras, 1991, Pg. 101, 102: Vol. I. pg i-xvi, 1968
26. Bhatt M. Ramakrishna - Essentials of Horary Astrology or Prasnapadavi, Motilal Banarasidass, Delhi-1992, Pg. XVII
27. Veezhinatham, N.- The New Catalogue Catalogorum, Vol. 13, Department of Sanskrit, Madras University 1991, Pg. 102
28. Praśna Mārga - B.V. Raman, Motilal Banarsidass, Bangolare Part 1, 1980, Delhi -1991, Reprint 1999-2003, Preface.
29. Gaur, Albertine - Catalogue of Malayabm Books in the British Museum, London, 1971, Pg. 277
30. Praśna Mārga - B.V. Raman, Motilal Banarsidass, Bangolare, Part 1, 1980, Delhi-1991, Reprint 1999-2003, Preface
३१. प्र.मा. व्याख्या - गुरु प्रसाद गौड़, चौखम्बा सुरभारती प्रकाशन, वाराणसी, २००७, भाग-१, प्रस्तावना।
32. Google - Sanskrit Book of Jyotish in Malayalam, Pg. 1.2
33. Sharma, K.V. - A History of Kerala School of Hindu Astrology, Punjab University, Hosiarpur, 1972, Pg. 67
34. Ibid, Pg. 67
35. Nilākantha Sarma has written a Sanskrit Commentary on the First Part of this Work. His Malayalam Commentary is called Upratna - Shikha. Bhatt M. Ramakrishna - Essentials of Horary Astrology or Prasnapadavi, Motilal Banarasidass, Delhi, 1992, Pg. XVII.
36. Ibid. XVIII

# ऋतु-विज्ञान : शतपथ ब्राह्मण के सन्दर्भ में

अपर्णा धीर

शतपथब्राह्मणे कीदृशम् ऋतुविज्ञानं दृश्यते इत्यत्र लेखे सप्रमाणं वर्ण्यते। ऋतुविज्ञानेन पशुविज्ञानं, वनस्पतिविज्ञानं, जीवविज्ञानं, पर्यावरणविज्ञानं, खगोल-विज्ञानं, मनोविज्ञानमिति विविधविज्ञानानां ज्ञानं जायते। ऋतवो वा असृज्यन्त, ते सृष्टा नानैवासन् इति शतपथश्रुतिः ऋतूनेव सृष्टेः मुख्यकारणं निगदति। इत्थमत्र शतपथश्रुतौ प्रतिपादितम् ऋतुविज्ञानं विवेचितमस्ति।

कर्मकाण्डप्रधान शुक्लयजुर्वेदीय 'वाजसनेयी संहिता' की माध्यंदिन शाखा से सम्बन्धित ब्राह्मण का नाम 'शतपथ' है। इस ब्राह्मण में प्रतिपादित ऋतु-विज्ञान ही प्रस्तुत पत्र का उद्देश्य है। 'ऋतु' शब्द ऋ + तु, कित् से निष्पन्न हुआ है।[१] इस शब्द का कथन मौसम, वर्ष के एकभाग तथा समय आदि के रूप में किया जाता है। मोनियर विलियम्स ने 'ऋतु' शब्द को निश्चित समय के रूप में ग्रहण किया है।[२] इस सन्दर्भ में 'कालमाधव' एवं 'वैदिक कोश' द्वारा दी गई ऋतु की निष्पत्ति प्रस्तुत शब्द को और अधिक स्पष्ट करती है। इसके अनुसार 'ऋतु' शब्द का 'ऋ' गत्यर्थक है, जिसके कारण ऋतु का अर्थ है 'सदागतिशील'[३] अर्थात् जो काल निरन्तर गतिशील है, उसे 'ऋतु' कहते हैं। प्रजापति को ऋतुओं का उत्पादनकर्त्ता (सजूर्ऋतुभिः- श. ब्रा. ८.२.२.८) मानकर शतपथ ब्राह्मण ने वर्ष में छः ऋतुओं की सत्ता स्वीकार की है[४] और वसन्त से शिशिर पर्यन्त ऋतुओं के नामों का भी उल्लेख किया है।[५] वस्तुतः ये ऋतुएँ सूर्य तथा चन्द्रमा की गति से प्रभावित होती हैं। इस तथ्य के अनेक उदाहरण इस यजुर्वेदीय ब्राह्मण में मिलते हैं।[६] वास्तव में कालखण्ड के रूप में विद्यमान ये ऋतुएँ परस्पर जुड़ी हुई हैं।[७] ऋतुओं की निरन्तरता के विषय में शतपथ का मत है कि ऋतुएँ हमेशा विद्यमान होती हैं, चाहे दिन हो या रात[८] तथा क्रम में सब ऋतुएँ पहली हैं, सब बीच की एवं सभी पिछली हैं।[९] शतपथ ब्राह्मण के इस कथन द्वारा विद्वान् सत्य प्रकाश ने ऋतु-चक्र का ग्रहण करते हुए, ऋतुओं को अन्त -रहित कहा है।[१०] इसी कारण

शतपथ में ऋतुओं को विनाश-रहित जानकर उनकी स्थिति अविनाशी ब्रह्म के शासन में कही है।[११]

कांल के अवयव के रूप में विद्यमान ये ऋतुएँ वास्तव में वैज्ञानिक दृष्टि से अत्यन्त महत्त्वपूर्ण हैं। 'कृष्ण यजुर्वेद : एक अध्ययन' नामक ग्रन्थ में कथित डॉ. जे. सी. भारतीय के मतानुसार ऋतु वह मासक्रम है जो पृथ्वी, जल, तेज, वायु, आकाश के समस्त तत्त्वों को गतिमय करके उनमें प्राणप्रद जीवन्त अणु तत्त्वों को उद्दीप्त करता है।[१२] इसी विषय की ओर संकेत करते हुए शतपथ ब्राह्मण ने इन ऋतुओं को पशु-विज्ञान, वनस्पति-विज्ञान, जीव-विज्ञान एवं पर्यावरण-विज्ञान से जोड़ा है। शतपथ ब्राह्मण ने ऋतुओं में वायु[१३] के अस्तित्त्व का कथन कर, इन ऋतुओं की स्थिति पृथ्वी से ऊपर[१४] मानी है। वस्तुतः शतपथ के अनुसार द्यौ और सूर्य के उत्तर में ऋतुओं की स्थिति है।[१५] इस प्रकार वातावरण के उल्लेख द्वारा **पर्यावरण-विज्ञान** की ओर संकेत प्राप्त होता है।

शतपथ ने ऋतुओं को 'अग्निमान्' कहा है क्योंकि उनमें अग्नितत्त्व की शक्ति है। इस विषय को स्पष्ट करते हुए शतपथ में दो कथन हैं। प्रथम कथनानुसार वर्णित है कि देवों ने सर्वप्रथम ऋतुओं को यज्ञ में भाग दिया, तत्पश्चात् ऋतुओं के कहने पर अग्नि को यज्ञ में स्थान मिला, इसीलिए अग्नि और ऋतुओं को यज्ञ में साथ-साथ आहुति दी जाती है।[१६] द्वितीय कथनानुसार वर्णित है कि देवताओं ने सब प्रकार के रूपों का रक्षक अग्नि को बनाया परन्तु लालच वश अग्नि, उन सब रूपों को एकत्र कर ऋतुओं में जा छिपा।[१७] इन कथनों से ऋतुओं में अग्नितत्त्व की सत्ता स्पष्ट होती है। अतः शतपथ का मत है कि इसी अग्नितत्त्व के कारण ऋतुओं में प्रजनन शक्ति है[१८], जिससे ये ऋतुएँ ओषधियों एवं पदार्थों को पकाती हैं।[१९] इसप्रकार शतपथ का यह वाक्य "देवताओं ने ऋतुओं से रात, दिन, मनुष्य तथा पशुओं को बनाया"[२०] सर्वथा उचित है। इस सन्दर्भ को और अधिक स्पष्ट करते हुए शतपथ में कहा गया है कि सभी ऋतुएँ देव हैं, परन्तु केवल तीन ऋतुओं की ही प्रधानता है– वसन्त, वर्षा, शरद क्योंकि इनमें ओषधियाँ उत्पन्न होती हैं।[२१] इस प्रकार यहाँ ऋतुओं को वनस्पति से जोड़ा गया है (**वनस्पति-विज्ञान**)। पुनः वनस्पति-विज्ञान को जीव-विज्ञान से जोड़ते हुए शतपथ का मन्तव्य है कि यह प्रज्ज्वलित ऋतुएँ अर्थात् अग्नितत्त्व से युक्त ऋतुएँ ओषधियाँ पकाती हैं, जिसके सेवन से प्रजाएँ उत्पन्न होती हैं।[२२] एक अन्य वाक्य में कथित है कि प्रजापति द्वारा ऋतुओं की सहायता से प्रजा की उत्पत्ति हुई।[२३] इसी प्रकार ऋतु और पशुओं में सम्बन्ध दिखाते हुए वर्षा ऋतु के जल से पशुओं की पुष्टि कही गई है (**पशु-विज्ञान**)।[२४] शतपथ के इन वाक्यों में की

गई सृष्टि-कल्पना का विज्ञान-परक उल्लेख दयानन्द भार्गव ने 'वेद-विज्ञान-वीथिका' में भी किया है। उनके अनुसार सृष्टि में चलने वाले यज्ञ का सम्बन्ध अग्नि और सोम से है। इन्हीं अग्नि और सोम के उतार-चढ़ाव से ऋतुएँ उत्पन्न होती है।[२५] शतपथ ने भी अग्नि और सोम की आहुति से वृष्टि का कथन किया है।[२६] प्रस्तुत प्रसंग में दयानन्द भार्गव द्वारा कथित अग्नि और सोम रूपी सृष्टि-यज्ञ, वास्तव में सूर्य (अग्नि) और चन्द्रमा (सोम) की ओर संकेत करता है। शतपथ ब्राह्मण में भी ऋतुओं को सूर्य और चन्द्रमा द्वारा प्रभावित कहा गया है।

वास्तव में ये सभी ऋतुएँ ऐसा सुखद वातावरण प्रदान करती हैं, जिससे प्रजा, अन्न, पौधे आदि जीवित रह पाते हैं अन्यथा सभी नष्ट हो जायें। वास्तव में प्रत्येक ऋतु का अपना नैसर्गिक स्वभाव अर्थात् अपना-अपना तेज होता है, कुछ ऋतुएँ ठंडी हैं, तो कुछ गर्म। ऐसे ही पृथ्वी पर उपलब्ध पदार्थों की भी उत्पत्ति में शीत अथवा उष्ण वातावरण की आवश्यकता होती है। ऋतुओं के इसी तेज का उल्लेख करते हुए पृथ्वी को गाय कहकर उसे वर्षा, शीत, गर्मी को सहन करने में समर्थ कहा गया है।[२७] इस प्रकार वर्षा, शीत, गर्मी शब्दों के प्रयोग से ऋतुओं के वातावरण को स्पष्ट किया गया है। प्रस्तुत ब्राह्मण में सभी ऋतुओं की कार्यशैली का निर्देश भी प्राप्त होता है "वसन्त आग्नीध्र है, इसीलिए उसकी विशेषता है कि इसमें दावानल होते हैं, ग्रीष्म अध्वर्यु है इसीलिए तपता है, वर्षा उद्गाता है इसीलिए बरसता है, शरद् ब्रह्मा है इसीलिए इसमें धान पकता है, हेमन्त होता है इसीलिए इसमें पशु क्षीण हो जाते हैं"।[२८] इसके अतिरिक्त भी शतपथ के अनेक वाक्यों में प्रत्येक ऋतु की विशेषता का कथन है–

### (अ) वसन्त ऋतु

'वसन्त' शब्द वस् + झच् + अन्तादेश से निष्पन्न हुआ है।[२९] शतपथ ब्राह्मण के कथनानुसार अग्नि से प्रजापति ने प्राण को तत्पश्चात् प्राण से वसन्त को बनाया।[३०] डॉ. जे. सी. भारतीय के कथनानुसार जिस समय पदार्थों में जीवदायक अग्निकण निवास करते हैं, वह वसन्त ऋतु है।[३१] सामान्य भाषा में इसे बहार के मौसम के नाम से जाना जाता है। शतपथ ने वसन्त ऋतु को संवत्सर का द्वार मानकर, उसे सभी ऋतुओं में प्रथम स्थान दिया है।[३२] यहाँ कथित है कि यज्ञ में दी गई समिधाओं से वसन्त ऋतु प्रज्वलित होकर दूसरी ऋतुओं को प्रज्वलित करती है अर्थात् यह प्रथम है, इसके बाद ही सभी ऋतुएँ क्रम सहित आती हैं।[३३] इस ऋतु की इसी प्रमुखता के कारण 'श्रीमद्भगवद्गीता' में श्रीकृष्ण ने स्वयं को ऋतुओं में वसन्त कहा है।[३४] शतपथ के कथनानुसार मधु एवं माधव मास को वसन्त ऋतु का आधार माना गया है।[३५] वैदिक-काल में प्रचलित इन

मासों के नामों की व्युत्पत्तियाँ तैत्तिरीय संहिता (१.१.१४) के भट्टभास्कर भाष्य तथा वाजसनेयी संहिता (७.३०) के उवट भाष्य में मिलती हैं। इन व्युत्पत्तियों के द्वारा ऋतुओं के स्वाभाविक गुणों का ज्ञान सरलता से होता है। उदाहरणतः "मधु–स च मधुप्रायत्वान्मधुरुच्यते। माधव–माधवः च त्वां प्रतिपद्यतामिति शेषः।"[३६] अथवा "मधु और माधव-मधु–प्रमुखमन्नं वसन्ते उत्पद्यत इति मधुमाधवौ-मासौ।"[३७] अभिप्राय यह है कि जो मास अत्यधिक सुगन्ध (मधु) से परिपूर्ण होता है एवं जिसमें पुष्पों की अधिकता होती है, उसे वसन्त ऋतु कहते हैं।

## (आ) ग्रीष्म ऋतु

'ग्रीष्म' शब्द की निष्पत्ति दो प्रकार से मानी गई है- ग्रस् + मक् अथवा गम् + मक्।[३८] इसकी उत्पत्ति के विषय में शतपथ ब्राह्मण का मत है कि वायु से प्रजापति ने मन को तत्पश्चात् मन से ग्रीष्म को बनाया।[३९] सामान्य भाषा में इसे गर्मी के मौसम के नाम से जाना जाता है। इस समय सूर्य की किरणों का ताप अत्यधिक बढ़ जाता है इसीलिए इस मौसम में सर्वदा उष्णता की प्रतीति होती है। शतपथ ब्राह्मण ने भी इस ऋतु में विद्यमान सूर्य के तेज की ओर संकेत करते हुए कहा है कि ग्रीष्म ऋतु तपती है।[४०] इसकी व्युत्पत्ति के विषय में जहाँ 'निरुक्त' ने इस ऋतु में सूर्य की किरणों से पृथ्वी के रस खींचे जाने का कथन किया है[४१], वहीं 'वैदिक कोश' का मानना है कि यह ऋतु जीवों को क्षय को प्राप्त कराती है।[४२] 'कृष्णयजुर्वेद : एक अध्ययन' नामक ग्रन्थ में भी डॉ. जे. सी. भारतीय ने ग्रीष्म ऋतु के विषय में यही कहा है– 'जिस ऋतु में सूर्य की किरणें समस्त पदार्थों को उष्मा प्रदान करती हैं उसको ग्रीष्म ऋतु कहा जाता है।"[४३] वस्तुतः ग्रीष्म ऋतु शुक्र एवं शुचि मासों पर आधारित होती है।[४४] और इन मासों का स्वभाव ही उष्णता प्रदान करना है। शतपथ में कथित ग्रीष्म ऋतु के मासों की व्युत्पत्ति तैत्तिरीय संहिता (१.१.१४) के भट्टभास्कर भाष्य तथा वाजसनेयी संहिता (७.३०) के उवट भाष्य में प्राप्त होती है। यहाँ वर्णित है "शुक्र-शुग्दीप्तिरस्मिन्नस्तीति भुम्नि तेनैव मत्वर्थीयोरप्रत्ययः। शुचि–शोचयिता शोषयिता सलिलानामिति शुचिः।"[४५] अथवा "शुक्र और शुचि–उभावपिशोचतेः शुष्यत्यर्थस्य।"[४६] अर्थात् जिस काल में जल तक सूख जाता है वह काल ग्रीष्म कहलाता है। ग्रीष्म काल के लिए निदाघ शब्द का भी प्रयोग होता है। शतपथ ब्राह्मण में 'निदाघ' शब्द की व्युत्पत्ति प्राप्त होती है– नि + धा + अघ, एवं यहाँ इसका अर्थ गर्मी कहा गया है।[४७]

## (इ) वर्षा ऋतु

'वर्षा' शब्द वृष् + अच् + टाप् से निष्पन्न हुआ है।[४८] शतपथ ब्राह्मण में कथित है कि प्रजापति ने आदित्य से चक्षु को तत्पश्चात् चक्षु द्वारा वर्षा को बनाया।[४९] वर्षा की व्युत्पत्ति देते हुए 'निरुक्त' में वर्णित है कि इनमें बादल बरसता है, इसीलिए वर्षा नाम पड़ा।[५०] वस्तुतः वर्षा ऋतु नभ और नभस्य नामक मासों पर आधारित मानी गई है[५१] और इन मासों का स्वभाव है बरसना। तैत्तिरीय संहिता (१.१.१४) के भट्टभास्कर भाष्य तथा वाजसनेयी संहिता (७.३०) के उवट भाष्य में कथित है कि "नभ – नह्यति बध्नाति जन्तूनिति नभः। नभस्य – न भातीति नभः।"[५२] अथवा "नभ और नभस्य – नह्यन्न सूर्यो भाति मेघप्रचुरत्वात् तस्मान्नभो नभस्यश्च।"[५३] अर्थात् जिस काल में मेघों की प्रचुरता होती है, वह काल वर्षा ऋतु के नाम से जाना जाता है। वस्तुतः शतपथ ब्राह्मण में वर्षा ऋतु के विषय में सबसे अधिक वर्णन मिलता है। यहाँ वाक्यों में उसकी वास्तविक स्थिति, उसकी रूप-रेखा तथा स्थिति आदि पर विस्तार से चर्चा की गई है।

सर्वप्रथम वर्षा ऋतु की स्थिति को अन्तरिक्ष में बताया गया है।[५४] तत्पश्चात् उसके स्वरूप का वर्णन करते हुए जल को इसका वास्तविक स्वरूप कहा गया है।[५५] अभिप्राय यह है कि जिस प्रकार वसन्त ऋतु में चारों ओर सुगन्ध का, ग्रीष्म ऋतु में उष्णता का एहसास होता है, उसी प्रकार वर्षा ऋतु का स्वरूप जल से ही बनता है। इस विषय में कहा गया है कि वर्षा ऋतु में जो वर्षा आती है, वह अग्नि से बनती है, अर्थात् अग्नि के प्रज्वलित होने से भाप बनती है, जिससे काले-काले मेघ बनते हैं और इस प्रकार वर्षा होती है।[५६] इस प्रकार यहाँ विज्ञान के वाष्पीकरण नामक विख्यात नियम की ओर ध्यान आकर्षित करने का प्रयास किया गया है। शतपथ ब्राह्मण में वर्षा ऋतु की रूप-रेखा इस प्रकार दी गई है – वर्षा अग्नि है, संवत्स, समिधा, बिजली लौ, बादल धुआँ, चमक अंगारा, गरज चिंगारियाँ है।[५७] आज भी जब-जब वर्षा – काल आता है तो यह स्थिति सामान्यतया देखने को मिलती है– बादल, गरज, चमक, बिजली, बारिश। शतपथ ब्राह्मण में प्रतिपादित वर्षा ऋतु की रूप-रेखा के बीच डॉ. जे. सी. भारतीय द्वारा दी गई व्युत्पत्ति में भली-भाँति दिखलाई पड़ते हैं। उनका कथन है कि जिस ऋतु में सूर्य की किरणें आर्द्र वायु को लेकर ऊष्मा के बल पर वाष्प बनाकर बरसना प्रारम्भ कर देती हैं, उस काल को वर्षा काल कहा जाता है।[५८]

शतपथ के वाक्यों में वर्षा के जल का माहात्म्य भी देखने को मिलता है। यहाँ कथित है कि जल की स्वाभाविक विशेषता यह है कि वह शान्ति पहुँचाता है।[५९] अतः वर्षा के जल को पवित्र, स्वच्छ, शुद्ध एवं वज्र की तरह

कठोर एवं तेज समझना चाहिए, जो हमारी बुराई को काट भी देता है और धो भी देता है।[६०] पाश्चात्य विद्वान् जे. गोंडा ने भी अपने ग्रन्थ 'मन्त्र इंटरप्रिटेशन इन द शतपथ ब्राह्मण' में वर्षा के जल के महत्त्व का कथन किया है।[६१] इस प्रकार यहाँ वर्षा के जल को धर्मानुकूल कहकर उसके महत्त्व को प्रतिपादित किया गया है।[६२] वर्षा का जल पय अर्थात् पीने योग्य और शक्ति प्रदान करने वाले अन्न से युक्त है, क्योंकि इसी जल से अन्न उत्पन्न होता है।[६३] वर्षा रूपी अग्नि में देवता गण देवलोक से वृष्टि की आहुत्ति देते हैं, जिससे अन्न की उत्पत्ति होती है।[६४] इस प्रकार यहाँ उपर्युक्त अन्तरिक्ष में कही गई वर्षा की स्थिति की ओर संकेत किया गया है। वायु से भी वर्षा की स्थिति कही गई है। यहाँ कथित है कि देव पूर्व की ओर वायु को चलाते हैं, तत्पश्चात् बादल, बिजली और गर्ज के बाद वर्षा का जल बरसता है।[६५] अतः कह सकते हैं कि वायु द्वारा वर्षा होती है[४], फिर औषधियाँ तथा वनस्पतियाँ उत्पन्न होती हैं।[६६] इस विषय में पुनः जे. गोंडा कहते हैं कि वर्षा से उत्पन्न इन ओषधियों के सेवन से ही पशु-जगत् का अस्तित्त्व बनता है।[६७] इसी प्रकार यहाँ एक स्थान पर स्पष्टतः कथित है कि जुती हुई भूमि के लिए ही वर्षा होती है।[६८] वर्षा ऋतु के कारण वातावरण में अनुकूलता आ जाती है जिससे कीड़े भोजन की तलाश में बाहर आते हैं।[६९] अन्त में कह सकते हैं कि शतपथ ब्राह्मण में वर्षा ऋतु का विज्ञानपरक विस्तृत विश्लेषण दर्शनीय है।

### (ई) शरद् ऋतु

'शरद्' शब्द शृ × आदि से निष्पन्न हुआ है।[७०] शतपथ ब्राह्मण में कहा गया है कि प्रजापति ने दिशाओं से श्रोत्र तत्पश्चात् श्रौत से शरद ऋतु को उत्पन्न किया।[७१] सामान्य भाषा में इसे पतझड़ का मौसम भी कहते हैं। डॉ. जे. सी. भारतीय ने शरद् ऋतु की व्युत्पत्ति इस प्रकार दी है– "जिस समय जल देकर मेघ रिक्त हो जाता है, वह समय शरद् ऋतु कहलाता है।"[७२] शतपथ ने शरद ऋतु के स्वाभाविक स्वरूप का वर्णन करते हुए माना है कि ग्रीष्म और हेमन्त में क्षीण हुई ओषधियाँ वर्षा में बढ़कर इस ऋतु में बाहर की तरफ फैल जाती हैं।[७३] शरद् ऋतु इष और ऊर्ज नामक मासों पर आधारित मानी गयी है।[७४] और इन मासों में स्वाभाविक रूप से ही अन्न की प्रचुरता होती है। तैत्तिरीय संहिता (१.१.१४) के भट्टभास्कर भाष्य तथा वाजसनेयी संहिता (७.३०) के उवट भाष्य के अनुसार "इष - इडन्नम्। भुम्नि मत्वर्थीयोऽकारः प्रत्ययः। ऊर्ज - ऊर्ग् रसः। स एव मत्वर्थीयोऽकारः।"[७५] अथवा "इष और ऊर्ज - इषमन्नमूर्जं तदुपसेचनं दध्यादि तदिह प्रचुरं भवति इति मतुब्लोपादभेदोपचारात् द्वौ मासावुच्येते"[७६]। यहाँ लौकिक दृष्टि से शरद् ऋतु को स्वधा कहा गया है।[७७] स्वधा का अर्थ होता

S. Caṭṭopādhyāya, however, says:

It, however, appears that after the rise of the Bhāraśivas who had their original home in padmāvatī the latter along with Mathurā- formed really one kingdom. If this view be accepted then it can be inferred that Mathurā came under the Nāgas during the rule of the third king of the Bhāraśiva Nāga whose daughter was married to the vākāṭaka crown Prince Gautamīputra, may have ruled in the first half of the fourth century AD. He may have been succeeded by nāga- sena and the latter by Gaṇapati nāga. Besides the nāga kings of Mathurā and Padmāvatī there appear to have been other smaller nāga principalities in different parts of north India immediately before the rise of the Guptas as a copper seal inscription of the 4th century AD speaks of a king named Maheśvara nāga son of nāgabhaṭṭa, Some coins found at Ahicchatra refer to King named Acyuta who may have been a nāga king ultimately vanquished by samudragupta.

Bhava nāga 340 AD has been declared as a powerful king of padmāvatī nāga kingdmn. He may be construed as vidūratha of Bāṇa whose army might have killed Brhadratha an unnamed king of Mathurā (the seven kings of Mathurā nāga dynasty having been kept secret by purāṇas and inscriptional records) or It may be reviewed that samudraguptas army having launched a massive digvijaya the nāgas of Mathurā having some Bṛhadratha as king known to Bāṇa night have been killed being a delinquent greedy person.

Dr. Devendra Handa in his Article in VIJ Viśvesvarā nanda Indological Journal IX 1-2 March Sept. 1972 entitled Coins of new Nāga King (Rudrila) says: Though the Purāṇas refer to seven nāga rulers of Mathurā and nine of padmāvatì before the rise of the guptas the existence of more than two dozen naga rulers who flourished before and during the gupta supremacy not only at Mathurā and Padmāvatì but also at other places has been attested to by epigraphic and numismatic evidence Padmāvatī alone has yielded coins of as many as twelve nāga potentates of the various devices such as the bull, peacock, wheel, Lion, Horse, Trident, Spear, Crescent, battle axe and Indradhvaja found in the nāga coin age the bull is the most popular.

Dr. Devendra Handa ensures the rule of the territory contiguous to that of Mālavas by Rudrila alias Rudradeva of the

Allahabad pillar inscription of samundra gupta Bṛhadratha Māthura therefore could have been a nāga potentate from among these tweleve or more nāgas killed by the army of vidūratha a potentate rival king of padmāvatī also kept unnamed in records inscriptional as well as numismatic.

---

1. Paper orignally meentpse presented for all India Oriental Conference Session 45 Rāstriya Sanskrit Sansthāna Kendrīya Vidyā Pīṭha Tirupati (Āndhra Pradesh) dated 2-4 June, 2010 Sent
2. Ex. Principal M.R Govt. College Fazilka (Punjab) PPO No. 83876 PB HIG Block No. 61 B-3, Sector-6, Parwanoo - 173 220.
3. लोभबहुलञ्च बहुलनिशि निधानम् उत्खनन्तम् उत्खात खड्ग प्रमाथिनी ममन्थ माथुरं बृहद्रथं विदूरथ वरूथिनी।
   Harṣa carita p 690, L-4, P 691, L-I, Calcutta edition edited with Jīvānanda Vidyāsāgāras commentary Amalā co-opted by his 2 sons Āśutoṣa and Nityabodha printed at Vācaspatya press Calcutta (Kolkata) 1939 (JNVSE)
   Also p 50 LL 21-22 Harsacarita (HC) Text and Introduction with notes by Mahāmahopādhyāya P.Y. Kane Motilal Banarsi Dass Bungalow road Jawahar Nagar Delhi. Second revised ed. 1965 (MLBD PVKE) and p 198 LL 11-13 (NSPE) Nirṅaya sāgara press ed. Bombay seventh edition 1946 with saṇketa tītkā of Śaṅkarakavi and p 352 LL 1-2 JNPE text with Hindi translation and saṅketa tīkā by jagannātha pāṭhaka vidyā bhavana granthamālā 36 chowkhamba vidyābhavana Vārāṇasī third ed. 1972.
4. JNVSE p 698 LL 4-5 वेणीनिगूढेन च शस्त्रेण विन्दुमती वृष्णिं विदूरथम्। MLBD PVKE P 51 L 16-17 NSPE P 200 L 8 and JNPE LL 7-8 E.B. cowell and F.W Thomas translate the two incidents as under.
   By the slashes of drawn swords vidūrathas army minced the avaricious Māthura king Bṛhadratha while he was digging treasures at dead of night.
   Moti Lal Banarsi Dass (MLBD) Delhi 1961 By arrangement with royal Asiatic society London p 192 LL 22-25 also p 194 LL 19-20 vindumatī the vṛṣṇi vidurātha with a dagger hidden in her braided hair.
5. KAŚ-1 (Kautiliyamartha śāstram) Part I, R.P Kangle University of Bombay 1960 ed. Text p 29

6. KAS -II (Kautilīyamartha śāstram part - II, P 57 R.P Kangle University of Bombay EngJish Translation 1-20.16.
7. I bid P 57 Notes.
8. P 566 Jñāna Maṇḍala limited. Aja Bhavana Santa Kabīra Mārga Vārāṇasī-I 1986 edition vide Mārkaṇḍeya Purāna 116, 10, 11 pp 586, 587 edited by मनसुख राय मोरऽक्लाईव रोड Calcutta 1962 edition.
विदूरथो नाम नृपः ख्यातकीर्तिरभूद्भुवि। तस्यपुत्रद्वयं जातं सुनीतिः सुमतिस्तथा। एकदा तु वनं यातो मृगयां च विदूरथः। ददर्श गर्ते सुमहद् भूमेर्मुखमिवोद्गतम् Mahābhārata Ādiparva 185-19 p 232 with Bṛhadratha in 185-22 p 232 and sabhā parva XIV 60 A
वितद्रुझल्लिवभ्रू च उद्धवोऽथ विदूरथः वसुदेवोग्रसेनौ च सप्तैते मन्त्रिपुङ्गवाः। I-bid p 307 pt I GPE Gorakhapura 1956
9. Vāyu Purāṇa p 510 (99. 230) (231) Manasukha Rai Mora 5 Clive Road Calcutta 1959 edition (Mūlamātram) also p 297 pt II edition 2008 parimal publications 27-28 Shakti nagar Delhi -110007 my own edition, सुरथस्य तु दायादो वीरो राजा विदूरथः विदूरथसुतश्चापि सार्वभौम इति श्रुतिः।
10. चम्पस्य तु पुरीरम्या रम्या या मालिनि भवत्। पूर्णभप्रसादेन हर्यङ्गस्य तु सुतोऽभवत्। हर्यङ्गस्य तु दायादो राजा भद्ररथः किल। अथ भद्ररथस्यासीद्वृहत्कर्मा प्रजेश्वरः। बृहद्रथः सुतः तस्य तस्माज्जज्ञे बृहन्मनः Vāya Purāṇa 99.105 112 P 504 pp 287-288 my edition I bid.
11. Bhāgavata purāna IX - 123.13.18 pp 456-457 GPE Gorakhapura, Seventh ed. .1961.
12. Kashi Sanskrit granthamaālā 165 Caukhambā Sanskrit Sansthāna Post Box 139 Jaḍau Bhavana K 37/116 Gopāla Mandira lane Vārāṇasī 1961, P 165.
13. Eastern Book Linkers 5825 New Chandrawal Jawahar Nagar Delhi 110007 2006 P 323
14. P 74 edited by paṇḍita kulapati at Jīvānanda Vidyāsāgara bhaṭṭācārya superintendant free Sanskrit college Calcutta Ānanda Printing press Reprint 1991 edition 27/170 at Jagat Vārāṇasī 2.
15. ब्रजजीवनप्राच्य भारती ग्रन्थमाला 6 चौखम्बा संस्कृत प्रतिष्ठान 38 -U.A. Jawahar Nagar Bugalow Road Delhi 110007 Reprint edition 1985
16. Munshi Ram Manohar Lal Nai Sarak Delhi 6 (Now 54 Rani Jhansi Road New Delhi 110055 Head Office) second revised edition 1960 printed 1892.
17. Nīti Sāra Pt I P 164 Introduction V.V Deshpande chapters 1

VII editor G.B. Kale and M.D Cimmanji Apte Ānandā śarma press poona Ānandāsrama sanskritgranthā valī 36 1958 King Vidūratha fell by the dagger of his spouse which she kept concealed in her hair knot edited by Manmatha Nātha Dutt Chowkharnbā Sanskrit series office Vārāṇasi 221001 Vol XC VII (97) second ed. 1979.

18. Bhāgvata Purāna p 282 GPE Gorakha pura 1961 seventh ed. Kevala Mūla
19. I bid P 445
20. P .288 GPE Gorakhpura text with Hindi translation by Muni Lal Gupta Vth ed. 1961
21. P 431मनसुखराय मोर 5 Clive Road Calcutta - 9 1959
22. Bāṇa by R D Karmarkar p 43 26th allusion Karnātaka University Dharwar 1969
23. Harṣacarita p 194 English translation MLBD Delhi 6 (Now 54 Rani Jhansi Road New Delhi 110055
24. P 133 हर्षचरित एक सांस्कृतिक अध्ययन बिहार राष्ट्रभाषापरिषद् पटना सम्मेलन भवन, पटना।
25. Mahābhārata pt III mūlamātram p 371
26. Mahābhārata Ādiparva p 232 pt I 1956 ed. GPE Gorakhpura GD Jālāna edition.
27. Bṛhatsaṁhitā p 475 text with Hindi translation Acyutānanda Jhā Śarmā vidyābhavana Sanskrit granthamālā 41 Chaukhambā Vidyābhavana Chowk Vārāṇasī 1985 and p 719 pt II text with English translation M. Ram Krishna Bhat MLBD Delhi 110007 reprinted 2000 AD.
28. I bid P 719 MRKB edition.
29. Mahābharata Pt IV स्वर्गारोहणपर्व V. 16-18 P 447 GPE Gorakhpura 1958 edition mūla mātram from H.P. Poddār edition.
30. Sūryanārāyaṇa chaudharis हर्षचरित उत्तरार्ध 5–8 Hindi translation pp 86, 89 विदूरथ की सेना ने कृष्ण पक्ष की रात में खजाना खोद कर निकालते हुए मथुरा के अत्यन्त लोभी राजा बृहद्रथ को खुली तलवार के प्रहारों से मार डाला। बिन्दुमती ने केशपाश में छिपाए शस्त्र से वृष्णि वंशी विदूरथ को मार डाला-संस्कृत भवन कठोतिया Post office Kājhā Distt. Pūrṇiyā (Bihar) 1948 edition.
31. P 33 Published Bhāratiya Itihāsa parisad by Moti Lal Banarsi Dass Banaras 1st edition 1946 reprinted ed. 1954
32. E HON I pp 146 - 148
33. VG:-A - p 34 (vākāṭaka Gupta age)
34. Harṣa carita JNVSE p 689 LL 4-5

35. EHONI P 147
36. P 309 part II published by Sh. K.L. Joshi Parimal Publication 27 -28 Shakti Nagar Delhi 110007 2008 edition edited by me as Dr. Sudarshan Kumar Sharna Ex. Principal M.R. Govt. College Fazilka PPO No. 83876/PS HIG Block No. 61, B-3, Sector-6, Parwanoo Distt. Solan (H.P.)
37. I bid p 309 verse 382
38. P 361 Gītā press Gorakhpura Fifth edition 1961 by H.P. Poddar and Muni lal Gupta text with Hindi translation.

उपेन्द्रकविविरचितं

# आशीः प्रणामविधिवस्तुनिदर्शनम्

( मङ्गलाचरणपद्यानां संग्रहः )

सम्पादिका

**डॉ. बीना मिश्रा**

# भूमिका

“आशी:प्रणामविधिवस्तुनिदर्शनम्” नामक प्रस्तुत हस्तलेख में मङ्गलाचरणात्मक पद्यों का सङ्कलन है। इस ग्रन्थ के रचयिता उपेन्द्र कवि हैं। हस्तलेख के प्रथम श्लोक के अनुसार आशी:प्रणामविधिवस्तुनिदर्शनम् नामक ग्रन्थ के आदि, मध्य और अन्त में मङ्गलाचरण होना चाहिये, विभिन्न ग्रन्थों का अवलोकन कर आदि भेद से आशीर्वादपरक मङ्गलाचरणों का संग्रह कर कवि ने इस ग्रन्थ की रचना की है–

> “आशी:प्रणामविधिवस्तुनिर्देशनाख्यं
> ग्रन्थादिमध्यसुसमाप्तिषु मंगलं स्यात्।
> ग्रन्थान्बहून्समवलोक्य तदाद्यभेद-
> आशीरुपेन्द्रकविना प्रविरच्यतेऽसौ॥”

प्रस्तुत ग्रन्थ में कुल 91 पद्यों का संग्रह है, जिनमें गणेश के पाँच, शिव के इक्कीस तथा विष्णु के दशावतारों के अन्तर्गत कृष्ण के बयालीस, मत्स्य के एक, कूर्म के दो, वराह के तीन, नृसिंह के चार, वामन के दो, परशुराम के दो, दशरथीराम के चार, हलीराम के दो, बुद्ध का एक तथा कल्कि के दो पद्य हैं। ये पद्य किन ग्रन्थों से उद्धृत हैं तथा उनके ग्रन्थकार कौन हैं, इसका उल्लेख सभी पद्यों में नहीं मिलता है। कुछ पद्यों में मात्र ग्रन्थकारों का नामोल्लेख किया गया है। जैसे– वराहावतार के तीन पद्यों में से दो पद्यों के रचयिता **रामचन्द्र** तथा तीसरे पद्य के रचयिता **भानुकर** का नामोल्लेख प्राप्त होता है। कृष्णवतार के एक पद्य में ग्रन्थकार के रूप में **मदनपाल** का तथा नृसिंहावतार के एक पद्य में ग्रन्थकार **लक्ष्मण** का नामोल्लेख किया गया है। इस प्रकार रामचन्द्र, भानुकर, मदनपाल तथा लक्ष्मण इन चार रचनाकारों का ही नामोल्लेख प्राप्त होता है। ग्रन्थ में संगृहीत पद्य अन्य संग्रह-ग्रन्थों यथा- सूक्तिमुक्तावली (SMA), सदुक्तिकर्णामृतम् (SK) सुभाषितासुधारत्नभाण्डागारम् (SSRB), शाङ्र्गधरपद्धतिः (SP), सुभाषितावली (SA), सुभाषितसुधानिधि (SS) में प्राप्त हैं। वहाँ कुछ पद्यों में पद्यकर्ता का नामोल्लेख भी प्राप्त हुआ है यथा-लक्ष्मीधर, लीलाशुक (कृष्णकर्णामृत

के कर्ता), जीवक, वररुचि, तथा हनुमत् आदि। अन्त्याक्षरीश्लोकसंग्रहः, श्रीपतिकृत् सुभाषितपद्धतिः, श्रीरामकल्पद्रुमः, गव्याहरणम्, चतुरङ्गविनोदः आदि ग्रन्थों में भी ये पद्य प्राप्त हैं। दानवाक्यावली ग्रन्थ के कर्ता सूर्यकर, संस्कृतभाषाप्रदीप ग्रन्थ के कर्ता सखारामरावजी शर्मा तथा राजशेखर द्वारा कृत पद्य भी इस ग्रन्थ में हैं। बृहत्स्तोत्ररत्नाकर ग्रन्थ में उल्लिखीत एक पद्य भी इस में संगृहीत हैं। इस हस्तलेख में संगृहीत पद्य अन्यत्र जिन ग्रन्थों में प्राप्त होते हैं, उन ग्रन्थों का, पद्यकर्ता का नामोल्लेख तथा पद्यों के पाठ-भेदादि को नोट्स (NOTES) में विस्तार से दर्शाया गया है। यत्र-तत्र विद्यमान लिपिगत त्रुटियों को दूर कर पाठ संशोधित कर दिया गया है।

**पाण्डुलिपि - परिचय–** राष्ट्रिय संस्कृत संस्थान (मानित विश्वविद्यालय) गंगानाथ झा परिसर, इलाहाबाद के हस्तलेख विभाग में संगृहीत इस हस्तलेख का परिचय निम्नवत् है–

| | | |
|---|---|---|
| ग्रन्थनाम | : | **"आशीः प्रणामविधिवस्तुनिदर्शनम्"** |
| ग्रन्थकार | : | उपेन्द्रकवि |
| लिपि | : | देवनागरी |
| भाषा | : | संस्कृत |
| पत्र सं. | : | 1–17 |
| आकार | : | 24×10 सें.मी. |
| एक्शेसन नं. | : | 37953 |
| स्थिति | : | सम्यक् |
| लाइन-प्रति-पत्र | : | 7 |
| वर्ण-प्रतिलाइन | : | 25 |
| पूर्ण/अपूर्ण | : | अपूर्ण |
| आधार | : | हस्तनिर्मित कागज |

**ग्रन्थकार-** हस्तलेख के प्रथम श्लोक में ही ग्रन्थ के विषयवस्तु एवं ग्रन्थ के रचनाकार का स्पष्ट उल्लेख है। ग्रन्थ के रचनाकार का नाम उपेन्द्रकवि हैं। कैटेलॉगस कैटेलॉगरम तथा न्यू कैटेलॉगस् कैटेलॉगरम् में उपेन्द्र नाम से कई

गन्थकारों के नाम प्राप्त हैं किन्तु उपेन्द्रकवि के नाम से किसी ग्रन्थकर्ता का नामोल्लेख नहीं प्राप्त होता है, इस ग्रन्थ में संगृहीत पद्यों का अवलोकन करने पर यह स्पष्ट होता है कि ग्रन्थकार उपेन्द्रकवि का काल अर्वाचीन है क्योंकि इस ग्रन्थ में संगृहीत पद्य प्राचीन कवियों के हैं। कागज एवं लिपि की दृष्टि से अनुमानत: यह ग्रन्थ उन्नीसवीं शती का प्रतीत होता है। ग्रन्थ में पुष्पिका का अभाव है अत: ग्रन्थ समाप्ति की सूचना एवं ग्रन्थ के लिपिकर्ता एवं लिपिकाल की कोई भी जानकारी नहीं प्राप्त होती है। सुभाषित-संग्रह-ग्रन्थों की परम्परा में यह ग्रन्थ अद्वितीय और अनूठा संग्रह-ग्रन्थ है।

## आशीःप्रणामविधिवस्तुनिदर्शनम्
## ( उपेन्द्र-कृतम् )

### श्रीगणेशाय नमः

आशीः प्रणामविधिवस्तुनिदर्शनाख्यं
ग्रन्थादिमध्यसुसमाप्तिषु मंगलं स्यात्।
ग्रन्थान्बहून्समवलोक्य तदाद्यभेद-
आशीरुपेन्द्रकविना प्रविरच्यतेऽसौ।।

### तत्रादौ गणेशः

क्रोडं तातस्य गच्छन्विशदबिसधिया मण्डलं शीतभानो-
राकर्षन् भालवैश्वानरनिशितशिखारोचिषा तप्यमानः।
गंगाम्भः पातुमिच्छुर्भुजगपतिफणाफूत्कृतैर्दूयमानो
मात्रा संबोध्यनीतो दुरितमपनुदाद्बालवेशो गणेशः।।

गौरीशंकरयोर्विनोदनविधौ नृत्यं दधद् भूतये
भूयाद्बालमृणालकोमलरुचिर्देवो गणानां पतिः।
यस्योदञ्चितकर्णतालचलिता दानाम्बुसिंधुस्खलद्
भृंगारंगमनोहरा श्रुतिपराः कूजन्ति लीलारसे।। 2।।

सिन्दूरारुणगण्डमण्डलगलद्दानाम्बुराशौ लसद्
व्यासक्तभ्रमरावली विजयते यस्योरुकण्ठस्थले।
मालेवोल्लसदिन्द्रनीलरचिता पाशाङ्कुशाभां वरान्
बिभ्राणः स नृकुञ्जराकृतधरः पायाद् गणाधीश्वरः।। 3।।

जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता
स्त्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्त्तुं धराम्।

पार्वत्या महिषासुरप्रमथने सिद्धादिभिर्मुक्तये
ध्यातः पञ्चशरेण विश्वजितये पायात् स नागाननः॥ 4॥

अपत्यवात्सल्यवशादुदीर्णं स्तन्यं पिपासुर्गिरिजाकुचाग्रे।
मुहुः कराग्रं चलयन्निभास्यो मनोरथान्नः सफली करोतु॥ 5॥

## अथ शिवः

ॐकारो यस्य कन्दः सलिलमुपनिषन् न्यायजालं मृणालं
ब्रह्माण्डं यस्य काण्डं प्रसरति परितो यस्य यागः परागः।
भृंगध्वानः पुराणं विजनसुरधुनीतीरवासोधिवासो
यस्यानन्दो मरन्दः पुरहरचरणाम्भोरुहं तद् भजामः॥ 6॥

किं मौलौ तेऽस्ति शम्भो सुदतिजलमिदं किं मुखं पद्ममेतत्
किं नीलावेणिकेयं सुतनु मधुकराः किं भ्रुवौ सुभ्रुवीच्यौ।
किं नेत्रे देवि मीनौ किमु कुचयुगुलं संगतौ चक्रवाकौ
इत्थं प्रश्नान् प्रियायाः सपदि परिहरन् पातु गंगाधरो वः॥ 7॥

भिंक्षार्थी क्व प्रयातः सुतनु बलिमखे ताण्डवं क्वाद्य भद्रे
मन्ये वृन्दावनान्ते क्व सखि पशुपतिः सूकरं किं न जाने।
कच्चिद्दृष्टोऽथवा नो जरटवृषपतिर्गोपणं वात्र वेत्ता
लीलासंवाद इत्थं जलनिधिहिमवत्कन्ययोस्त्रायतां वः॥ 8॥

आसीद्यस्मात्कुमारः कुवलयवदसौ लीलयोवाहगङ्गां
वामा यस्यांगसंगापिहितजनचयो भूविशेषाश्रयोऽपि।
लंकेशाद्येकनाथो हिमकररुचिभृद्यो गवीशध्वजोसा-
वैकस्याद्यस्यलोपादपहरतु हरिः पातकं वः स्मरारिः॥ 9॥

येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो
ये गंगां च दधेऽन्धकक्षयकरो यो बर्हिपत्रप्रियः।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यं च नामामराः
सोऽव्यादिष्टभुजंगहारवलयस्त्वां सर्वदा माधवः॥ 10॥

राजा राजार्चिताङ्घ्रेरनुपचितकलो यस्य चूडामणित्वं
नागा नागात्मजार्द्धेनभसितधवलं यद्वपुर्भूषयन्ति।

मारा मारागिणी भून्मतिरिरिति यमिनां येन वोदाहिमारः
सप्ता सप्ताश्चनुन्नारुणकिरणनिभाः पातु बिभ्रत्त्रिनेत्रः।। 11।।

इन्द्रात्प्रार्थय मेदिनीं धनपतेर्बीजं बलाल्लांगलं
दण्डेशान्महिषं वृषोऽस्ति भवतः फालं त्रिशूलादपि।
शक्ताऽहं निजगेहकर्मकरणे स्कन्दोऽस्ति गोरक्षणे
त्रस्ताऽहं भव भिक्षया कुरु कृषिं गौरीवचः पातु वः।। 12।।

मौलौ किन्नु महेश मानिनि जलं किं वक्त्रमम्भोरुहं
किं नीलालकवेणिका मधुकरी किं भ्रूलतावीचिका।
नेत्रे किं शफरीद्वयं स्तनयुगं प्रेङ्खद्रथांगद्वयं
साशंकामिति मानयन् गिरिसुतां गंगाधरः पातु वः।। 13।।

स्वेदस्ते कथमीदृशः प्रियमते त्वन्नेत्रवह्नेर्विभो
कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेस्तव।
रोमाञ्चः कथमेष देवि भगवन् गङ्गाम्भसां सीकरै-
रित्थं भर्त्तरि भावगोपनपरा गौरी चिरं पातु वः।। 14।।

चञ्चत्या दहति क्षतक्षितिचलच्चक्षुःश्रवः संहतिः
तत्स्याद्दिक्पतिदिग्गजघ्नुति धराधोऽशेष नस्यद्रति।
दोर्दण्डा हति सतति त्रुटदुरुब्रह्माण्डजस्य स्थिति-
स्त्रस्तश्रीपतिसंभ्रमन्मतिभयस्यास्तां मुदे ताण्डवम्।। 15।।

सन्ध्याताण्डवडम्बरप्रणयिनो भर्गस्य चण्डभ्रमि-
व्यानृत्यद्भुजदण्डमण्डलभुवो झञ्झानिलाः पान्तु वः।
येषामुच्चलतां जवेन झटिति व्यूहेषु भूमीभृता-
मुड्डीनेषु बिडौजसा पुनरसौ दम्भोलिरालोकितः।। 16।।

भद्रं चन्द्रकले शिवं सुरनदिश्रेयः कपालावले
कल्याणं भुजगेन्द्रवल्लिकुशलं विष्वग्जटासंस्थिते।
इत्याहुर्मिलिताः परस्परममूर्यस्मिन्प्रशान्तिं गते
कल्पारम्भघटीनटस्य भवतात्तन्नः श्रिये ताण्डवम्।। 17।।

वांश्चारेड्ध्वजधग्धृतोड्वधिपतिः कुध्रेड् जजानिर्गणेड्
गोराडारुड्रुरः सरेड्रुतरग्रैवेयकभ्राडरम्।

उड्वीड्रुड्नरकास्थिधृक्त्रिदृगिभेडार्द्राजिनाच्छच्छविः
स स्तादम्बुमदम्बुदालिगलरुग्देवो मुदे वो मृडः॥ 18॥

नेत्रोत्था दशमध्वजं सनवमं यस्यादिगोदग्धवा-
न्सूर्यो यस्य चकेऽस्त्यसप्तमउरो केतौ द्वितीयश्च सः।
षष्ठ्येकादशसत्कुचावनिभृतः सद्वादशाक्षी च सा
श्रीमत्पञ्चमगातृतीयकमिदं क्लेशाष्टमात्पातु वः॥ 19॥

च्युतामिन्द्रोर्लेखां रतिकलहभग्नं च वलयं
समं-चक्रीकृत्य प्रहसितमुखी शैलतनया।
अवोचद्यं पश्येत्यवतु स शिवः सा च गिरिजा
स च क्रीडाचन्द्रो दशनकिरणापूरिततनुः॥ 20॥

सहस्रास्यो नागः प्रभुरपिमतः पञ्चवदनः
षडास्यो हन्तैकस्तनय इतरो वारणमुखः।
सदाभैक्ष्यं शश्वत् प्रभवति कथं वर्तनमिति
श्वसन्त्यां पार्वत्यामथ जयति शंभुः स्मितमुखः॥ 21॥

स्वयं पञ्चाननःपुत्रो गजाननषडाननौ
दिगम्बरः कथं जीवेदन्नपूर्णा न चेत् गृहे।
इति श्रुत्वा प्रहसितां कृतहासः शिवः शिवां
आलिलिङ्गे क्षमालुर्यः सोऽव्यात्त्रिभुवनं सदा॥ 22॥

पातु वो गिरिजामाता यस्य द्वादशलोचनः।
तथैव गिरिजामाता द्वादशाद्धार्द्धलोचनः॥ 23॥

वामांगीकृतवामाङ्गि कुण्डलीकृतकुण्डलि।
आविरस्तु पुरोवस्तु भूतिभूत्यम्बराम्बरम्॥ 24॥

पायाद्वःशितिकण्ठस्य तमालश्यामलो गलः।
संसक्तपार्वतीबाहुसुवर्णनिकषोपलः॥ 25॥

मौलौ भाले कराग्रे च्र कविभक्तादिवन्दितः।
कस्याप्यन्तकरः कामं शंकरः शंकरोतु वः॥ 26॥

# अथ विष्णुः

मल्लैः शैलेन्द्रकल्पः शिशुरितरजनैः पुष्पचापोऽङ्गनाभि-
र्गोपालैः प्राकृतात्मा दिवि कुलिशभृता विश्वकायो प्रमेयः।
क्रुद्धः कंसेन कालो भयचकितदृशो योगिभिर्ध्येयमूर्ति-
र्दृष्टो रंगावतारो हरिरमरगणानन्दकृत् पातु युष्मान्॥ 27॥

कोऽयं द्वारि हरिः प्रयात्युपवनं शाखामृगेणात्र किं
कृष्णोऽहं दयिते, बिभेमि सुतरां कृष्णादहं वानरात्।
मुग्धेऽहं मधुसूदनोऽभिलषता तामेव गत्वा वन-
मित्थं निर्वचनीकृतो दयितया ह्रीणो हरिः पातु वः॥ 28॥

अंगुल्या कः कपाटं प्रहरति कुटिले माधवः किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः।
नाहं घोराहिमर्दी किमुत खगपतिर्नो हरिः किं कपीन्द्र
इत्येवं सत्यभामा प्रतिवचनजितः पातु वः पद्मनाभः॥ 29॥

यातः किं बहुकालमेषमृगयासक्त्या विलम्बः कुतो?
गन्धोऽन्यो नवपुष्पजः श्रमजलं घर्मात्क्षतं कण्टकैः।
अस्त्येवं मृगया न कस्यचिदहो दष्टोऽधरो दृश्यते
शङ्कापूरणमत्रकारणमिदं सम्यक् प्रमाणं वद॥ 30॥

अम्भांसि प्रविशामि कुम्भनिहितं कर्षामि कुम्भीनसं
ज्वालाजालसमाकुले हुतवहे तिष्ठामि वा कामिनि।
यद्वा सुन्दरि देवतामभिहितामुल्लङ्घयिष्याम्यहं
यद्वा किञ्च तुलाधिरोहणमहं सम्यक् प्रमाणं वद॥ 31॥

तोयं ते शयनीयमेव जलधारावासभूतः फणी
त्वत्तेजः प्रतिभास एष दहनो भृत्याः समस्ताः सुराः।
कुक्षिन्यस्त जगत्त्रयस्य भवतः किं स्यात्तुलारोहणं
व्यर्थे दिव्यमिति प्रिया वचसि च स्मेरो हरिः पातु वः॥ 32॥

तिर्य्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्
गीतस्थानकृतावधानललना लक्षैर्न संलक्षिताः।

संमुग्धे मधुसूदनस्य मधुरे राधामुखेन्दौ मृदु-
स्पन्दं कन्दलिताश्चिरं ददतु वः क्षेमं कटाक्षोर्मयः॥ 33॥

वृष्टिव्याकुलगोकुलायनवशादुद्धृत्य गोवर्द्धनं
बिभ्रद्बल्लवबल्लवीभिरधिकानन्दाच्चिरं चुम्बितः।
स्निग्धः कामवशार्पितोधरतटे सिन्दूरमुद्राङ्कितो
बाहुर्गोपतनोस्तनोतु भवतः श्रेयांसि कंसद्विषः॥ 34॥

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थलि-
नेपथ्योचितनीलरत्नमवनीभारावतारान्तकः।
स्वच्छन्दं ब्रजसुन्दरीजनमनस्तोषप्रदोषोदयः
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः॥ 35॥

प्रीतिं वस्तनुतां हरिः कुवलयापीडेन सार्द्धं रणे
राधापीनपयोधरस्मरणकृत् कुम्भेन सम्भेदवान्।
यत्र स्विद्यति मीलति प्रपतति प्रीत्या हरौ तत्क्षणं
कंसस्यालमभूज्जितं जितमिति व्यामुग्धकोलाहलः॥ 36॥

त्वामप्राप्य मयि स्वयंवपुधरो क्षीरोदतीरे पुरा
शंके सुन्दरि कालकूटमपिबन्मूढो मृडानीपतिः।
इत्थं पूर्वकथाभिरन्यमनसो विक्षिप्य वक्षोऽञ्चलं
राधायास्तनकोरकौ परिलसन्नेत्रो हरिः पातु वः॥ 37॥

पर्यङ्कीकृतनागनायकफणाश्रेणीमणीनाङ्गणे
संक्रान्तप्रतिबिम्बसश्चलतया बिभ्रद्वपुर्विक्रियाम्।
पादाम्भोरुहचारिवारिधिसुतामक्ष्णा दिदृक्षुः शतैः
कायव्यूहमिवाचरन्नुपचिताकूतो हरिः पातु वः॥ 38॥

कालिन्दीपुलिनोदरेषु मुसली यावद्गतः खेलितुं
तावत्कर्बुरिकापयः पिब हरे वर्द्धिष्यते ते शिखा।
इत्थं बालतया प्रतारणपरं श्रुत्वा यशोदा वचः
पायाद्वः स्वशिखां करेण विमृशन् क्षीरेऽर्द्धपीते हरिः॥ 39॥

बर्हेणाङ्कितमूर्द्धजोगजगतिर्भिन्नाञ्जनश्यामलो
वेणुं लोलकराङ्गुलीभिरनिशं विन्यस्य वक्त्राम्बुजे।

गायन् गानरसेनगाः प्रमुदिता वृन्दावने चारयन्
श्रीकृष्णः श्रियमातनोतु भवतां गोपालचूडामणिः।। 40।।

नीवीबन्धविधूननोद्यतकरो राधारतेरिच्छया
कृष्णस्तत्क्षणमागतामभिमुखीं दृष्ट्वा यशोदां ततः।
मातः पश्य जुगोप गोपवनिता मत्कन्दुकं वाससी-
त्येवं व्याजमुदीरयन् हरतु वः पापानि धूर्तो हरिः।। 41।।

कृष्णेनाम्बुगतेनरन्तुमधुना मृद्भक्षितास्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम्।
व्यादेहीति विकासिते तु वदने दृष्ट्वा समस्तं जगत्
माता यस्य जगाम विस्मयपदं पायात्स वः केशवः।। 42।।

रामो नाम बभूव हुं तदबलासीतेति हुं तां पितु-
र्वाक्यात्पञ्चवटीवने विरचतस्तस्याहरद्रावणः।
दोलायामिति पूर्वजन्मचरितं श्रुत्वा स मात्रेरितं
सौमित्रे क्व धनुर्धनुर्धनुरिदं जल्पन् हरिः पातु वः।। 43।।

मातः श्राम्यसि तिष्ठ गोरसमहं मथ्नामि मन्थानमि-
त्यालव्यस्थितमीश्वरः सरभसं दीनाननं वासुकिः।
सासूकं कमलालया सुरगणः सानन्दमुद्यद्भयं
राहुः प्रैक्षत यं सदायमनघो बालो हरिः पातु वः।। 44।।

मातस्तर्णकरक्षणाय यमुनातीरे न गच्छाम्यहं
कस्माद्वत्स पिनष्टि पीवरकुचद्वन्द्वेन गोपीजनः।
भ्रूसंज्ञाविनिवारतोप्यसदृशं जल्पन्यशोदाग्रतो
गोपीपाणिसरोजमुद्रितमुखो दामोदरः पातु वः।। 45।।

पीठे पीठनिषण्णबालकगले तिष्ठन् सगोपालको
यन्त्रान्तःस्थितदुग्धभाण्डमवकृष्याच्छाद्य घण्टारवम्।
वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन्यः पयः
पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत्।। 46।।

देवे वर्षति यज्ञविप्लवरुषा वज्राश्मवर्षोत्करैः
सीदत्यालपशुस्त्रि आत्मशरणं दृष्ट्वानुकम्प्युत्स्मयन्।

उत्पाट्यैककरेण शैलमबलो लीलोच्छिलीन्ध्रं यथा
बिभ्रद्गोष्ठमपान्महेन्द्रमदभित् प्रीयान्न इन्द्रोगवाम्॥ 47॥

कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया
युक्तं तन्नवनीतभाजनपुटे न्यस्तं किमर्थं करः।
कर्त्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता
बालावत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः॥ 48॥

रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा-
मभ्यर्णे परिरभ्यनिर्भरपुरः प्रेमान्धया राधया।
साधु त्वद्वदनं सुधामयमिति व्याहृत्यगीतस्तुति-
व्याजादुद्भटचुम्बितस्मितमनोहारी हरिः पातु वः॥ 49॥

संमुष्णन् नवनीतमन्तिकमणिस्तम्भे स्वबिम्बोदयं
दृष्ट्वा मुग्धतया कुमारमपरं संचिन्तयन् शङ्कया।
मन्मित्रं हि भवान्मया हि भवतो भागः समः कल्पितो
मा मां सूचय सूचयेत्यनुनयन् बालो हरिः पातु वः॥ 50॥

साकूतस्मितमाकुलाकुलगलद्धमिल्लमुल्लासित-
भ्रूवल्लीकमलीकदर्शितभुजामूलार्द्धहस्तस्तनम्।
गोपीनां निभृतं निरीक्ष्य ललितं किञ्चिच्चिरं चिन्तयन्
नृत्यन् मुग्धमनोहरो हरतु वः क्लेशं नवः केशवः॥ 51॥

देवः पायात्पयसि विमले यामुने मज्जतीनां
याचन्तीनामनुनयपदैः वञ्चितान्यंशुकानि।
लज्जालोलैरलसरुचिरैरुन्मिषत्पञ्चबाणै-
र्गोपस्त्रीणां नयनकुसुमैरर्चितः केशवो वः॥ 52॥

कृष्णे हृत्वासि चयनिचयं कूलकुञ्जाधिरूढे
मुग्धा काचिन्मुहुरनुनयैः कोमलं व्याहरन्ती।
सभ्रूभङ्गं सदरहसितं सत्रपं सानुरागं
छायाशौरेः करतलगतान्यम्बराण्याचकर्ष॥ 53॥

ओष्ठं गृह्णन् शिशुरितिधिया चुम्बितो बल्लवीभिः
कण्ठं जिघ्रन्नरुणितपदं गाढमालिङ्गिताङ्गः।

दोष्णा लज्जापदमभिमृशन्नङ्कमारोपितात्मा
धूर्त्तस्वामी हरतु दुरितं दूरतो बालकृष्णः॥ 54॥

प्रकृष्टचलकुण्डलस्तबकघृष्टगण्डस्थलं
महार्हमणिमेखलं मरकताङ्कुरश्यामलम्।
करोतु करुणां सदा कलितपञ्चषाब्दक्रमं
महः किमपि मोहनं कपटशैशवं केशवम्॥ 55॥

सकलभुवनबन्धोर्वैरमिन्दोः सरोजै-
रनुचितमिति मत्वा यः स्वपादारविन्दे।
घटयितुमिव मैत्रीमाननं योजयन्यो
वटदलपुटशायी मङ्गलं नः कृषीष्ट॥ 56॥

—मदनपालस्य

दधिमथननिनादैस्त्यक्तनिद्रः प्रभाते
निभृतमदमगारं वल्लवीनां प्रविष्टः।
मुखकमलसमीरैराशुनिर्वाप्य दीपान्
कवलितनवनीतः पातु गोपालबालः॥ 57॥

करनिरसितकण्डून्याण्डवस्यन्दनाश्वा-
ननुदिनमभिषिञ्चन्नङ्गुलिस्थैः पयोभिः।
अवतु विनतगात्रस्तोत्रनिस्यूतमौलि-
र्दशनकलितरश्मिर्देवकीपुण्यराशिः॥ 58॥

पङ्कावलिप्तनिखिलावयवं समीक्ष्य
दामोदरं वदति कोपवशाद् यशोदा।
किं सूकरोऽसि गतजन्मनि पूतनारे
इत्युक्ति सस्मितमुखोऽवतु वो मुरारिः॥ 59॥

आताम्रपाणिरसनावलयेप्रणोद-
मालोलहारमणिकुण्डलहेमसूत्रम्।
आजिश्रमाम्बुकणमम्बुदनीलवर्णं
पायाद् धनञ्जयरथाभरणं महो नः॥ 60॥

पद्मापयोधरतटीपरिरम्भलग्न-
कश्मीरमुद्रितमुरो मधुसूदनस्य।
व्यक्तानुरागमिव खेलदनङ्गखेद-
स्वेदाम्बुपूरमनुपूरयतु प्रियं वः।। 61।।

राधा पुनातु जगदच्युतदत्तचित्ता
मन्थानमाकलयती दधिरिक्तपात्रे।
तस्यास्तनस्तबकचञ्चललोचनालि-
र्देवोऽपि दोहनधिया वृषभं निरुन्ध।। 62।।

विहाय पीयूषरसं मुनीश्वरा ममाङ्घ्रिराजीवरसं पिबन्ति किम्।
इति स्वपादाम्बुजपानलोलुपः स कोऽपि गोपालशिशुर्मुदेस्तु नः।। 63।।

घटोदकेषु प्रतिमाशशाङ्कं विलोक्य कृष्णो नवनीतबुद्ध्या।
आदातुमन्तर्विहिताग्रहस्तः पायात् तदप्राप्तिसमाकुलो वः।। 64।।

यः पूतनामारणलब्धवर्णः काकोदरो येन विनीतदर्पः।
यशोदयालङ्कृतिमूर्तिरव्यात् नाथो यदूनामथवा रघूणाम्।। 65।।

यो भूमिभारोद्धरणाय चक्री चक्रेऽवतारं वसुदेवगेहे।
गोपीजनानन्दकरो मुकुन्दः पायात्स नो यादवराजसिंह।। 66।।

यो व्यामाडिनगो हरीडुडुगो युग्मः क्वगध्रोबभी-
मर्भ्वस्वश्चसुकी रमारतरसोनाभ्यब्रुडासीनकः।
घोसच्चम्बवनम्य यत्सलिलजो वार्द्धिस्वपोष्टाददौ
राद्योगद्यसि वाडघादमृतदः पायात् स वः कन्दभः।। 67।।

पायाद्वः करणोरणोरणरणोराणोरणोवारणो
दत्ता येन रमारमारमरमारामारमा सा रमा।
स श्रीमानुदयोदयोदयदयोदायोदयोदेदयो
विष्णुर्जिष्णुरभीरभीरभिरभीराभीरभीसारभीः।। 68।।

## अथ मत्स्यः

पुच्छं चेदहमुच्छ्रयाम्यनवधिस्तुच्छी भवेदम्बुधिः
क्रीडां चेत्कलये मनागपि जले पीडापरं यादसाम्।
निस्पन्दो भृशमामृशन्निति भरब्रह्माण्डभाण्डक्षय-
क्षोभात्कुञ्चितवेश एष भगवान् प्रीणातु मीनाकृतिः।। 69।।

## अथ कूर्मः

पायान्मायाजरठकमठाधीश्वरो ब्रह्मनित्या-
धिष्ठानोच्चैर्मठ इव चयः पत्तनेपन्नगीनाम्।
धत्ते धन्या यदुपरि धरा शेषशीर्षोषिताऽसौ
मन्दोन्मीलन्नवकमलिनीकाण्डपत्रस्थलक्ष्मी।। 70।।

कमठतनु सुरक्षा पातु पातालकक्षा
स्थितविलसदकक्षाऽनेकपीचारुकक्षा।
गुणनिचितखकक्षा सर्वतोभग्नकक्षा
धृतधनुररिकक्षा पृष्ठगक्षोणिकक्षा।। 71।।

## अथ वराहः

यस्यालीढमृणालतन्तुवदियं दन्तोपरिस्वर्धुनी
दृक्कोणोषितदूषिके इव नभस्येनौ विवस्वद्विधू।
किं चूडोत्थसटाग्रजन्मनलिनी पत्राभमन्तर्नभः
सोऽयं कोलकलेवरस्तु कुरुतां कल्याणमव्याहतम्।। 72।।

—रामचन्द्रस्य

भूयादेष सतां हिताय भगवान् कोलावतारो हरिः
सिन्धोः क्लेशमपास्य यस्य दशनप्रान्ते नटन्त्या भुवः।
तारा हारति वारिदस्तिलकति स्वर्वाहिनी माल्यति
क्रीडादर्पणति क्षपापतिरहर्देवश्च ताटङ्कति।। 73।।

—रामचन्द्रस्य

बिभ्राणोऽभिनवेन्दुकोटिकुटिलं दंष्ट्राङ्कु क्रीडया
क्रोडाकारधरो हरिः स भगवान् भूयाद्विभूतिप्रदः।
यस्योत्क्षिप्तवतः क्षमाकमलिनीमालम्बमानश्चिरं
लोलद्वालमृणालनालकलनां भेजे भुजङ्गाधिपः॥ 74॥

—भानुकरस्य

## अथ नृसिंहः

उद्भिद्य स्तम्भमुद्यन् ककटकटकटद्भीषयन् गर्जितैस्वै-
र्ज्वालाभिर्दृग्भवाभिर्धधडधडधडं ज्वालयन् द्युप्रदेशान्।
इन्द्रारातीन्द्रतुन्दं फफरफरफरादार्यतीक्ष्णैर्नखाग्रै-
र्दृष्ट्वा प्रह्लादमग्रे खखदखदहसन् श्रीनृसिंहः पुनातु॥ 75॥

नृहरितनुरितारा सन्नखोद्भिन्नतारा
पतिमतिरिपुतारा रावसंत्रासितारा।
अवतु कपिशतारा भीषणासत्सुतारा
दवनसदवतारा केसरोत्क्षिप्ततारा॥ 76॥

आह्लादयत्वेषखरैर्नखाग्रैर्दैतेयवक्षःखनिमुत्खनन्वः।
प्रह्लादहृद्यं हृदये द्वितीयमन्वेष्टुमिच्छन्निवसूनुरत्नम्॥ 77॥

पान्तु वो नरसिंहस्य नखलाङ्गलकोटयः।
हिरण्यकशिपोर्वक्षःक्षेत्रासृक्कर्दमारुणाः॥ 78॥

—लक्ष्मणस्य

## अथ वामनः

किं छत्रं किन्नु रत्नं तिलकमुत तथा कुण्डलं कौस्तुभो वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे।
ऊर्ध्वं मौलौ ललाटे श्रुतिहृदयकरे नाभिदेशे च दृष्टं
पायात् तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्द्धमानक्रमेण॥ 79॥

तनुरवितुमभीका वामनाख्यास्त्वभीका
हृतबलिसदनीका क्रान्तखद्योवनीका।
भवजलधितरीका बिभ्रती पुण्डरीका

दिनकरकमलीका रातिदत्तव्यलीका॥ 80॥

## अथ पर्शुरामः

रामे ब्राह्मणवेषधारिणि धनुर्धृत्वा कराम्भोरुहे
सिञ्जिन्या गुटिकास्त्रमारचयितुं कैलासमाकर्षति।
तात त्राहि सुत प्रयाहि दयिते निर्याहि सौधाद्बहि-
र्वारं वारमयं पुरान्तकपुरक्षोभः शिवायास्तु नः॥ 81॥

द्वारे कल्पतरून् गृहेषु सुरभीश्चिन्तामणीनङ्गणे
पीयूषं सरसीषु वक्त्रकुहरे विद्याश्चतस्त्रोदश।
यः किं कर्त्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः
पायाद् वोऽवनिदेवपालनपरो भूदेवभूषामणिः॥ 82॥

## अथ दाशरथी रामः

कौशल्यालसदालवालजनितः सीतालतालिङ्गितः
सिक्तः पङ्क्तिरथेन सोदरमहाशाखाभिरभ्युन्नतः।
रक्षस्तीक्ष्णनिदाघपाटनपटुश्छायाश्रितानन्दकृद्
युष्मद्वाञ्छितसत्फलानि फलतु श्रीरामकल्पद्रुमः॥ 83॥

बालक्रीडनमिन्दुशेखरधनुर्भङ्गावधिप्रह्वता
ताते काननसेवनावधिकृपा सुग्रीवसख्यावधि।
आज्ञावारिधि बन्धनावधियशो लङ्केशनाशावधि
श्रीरामस्य तनोतु लोकवशता जानक्युपेक्षावधि॥ 84॥

सीतामुखाब्जसारङ्ग सत्सारङ्गपयोधरः।
सारङ्गगामी रामस्त्वां पातु सारङ्गलोचनः॥ 85॥

योगसंयोगभाक्संख्ये चतुर्योगप्रयोगवान्।
योगैकगम्यः श्रीरामो योगक्षेमं करोतु वः॥ 86॥

## अथ हलीरामः

निर्यात्वाशु हिमांशुमण्डलमधः पीत्वा तदन्तः सुधां
कृत्वैन चषकं हसन्निति हलापानाय कौतूहलात्।
भो देव द्विजराजिमादृशिसुरास्पर्शोऽपि न श्रेयसे
मां मुञ्चेति तदर्थितो हलधरः पायादपायाज्जगत्।। 87।।

वनभुविकृतकेला नुन्नताशोकशेला
अवितपुरुतरेला देवसंघेष्टफेला।
सितरुगसितचेला हंसयन्ती महेला
ननु तनुरनुवेला नन्ददास्तात्सुखेला।। 88।।

## अथ बुद्धः

मायाबद्धकुतूहले भगवति व्यालोलयत्यागमा-
नोङ्कारेण भयातुरेणचलितं बिन्दुं विहाय क्वचित्।
ओकारः करपञ्जरपुरभिदो भेजे त्रिशूलच्छलात्
बिन्दुश्चक्रमिषेणकैटभरिपोस्तस्थौ कराम्भोरुहे।। 89।।

## अथ कल्किः

खिन्नां दुर्जनभारतोऽतिलघयन् भूमिं निहत्याशु ता-
न्नञ्चस्तद्वदनाम्बुजैस्तदबला नेत्राम्बुभिः क्षालयन्।
पायाद्वो धृतकल्क-आर्यजनतामानाय नानागमान्
ध्यानाय स्वतनूमपि प्रथयितुं नूनं युगान्ते हरिः।। 90।।

यवनीनयनाम्बुधोरणीभिर्धरणीनामपनीयताप-वह्नीन्।
सुकृतद्रुमसेकमाचरन्तं धृतकल्कं प्रणमामि निर्विकल्पम्।। 91।।

# NOTES

## (उपेन्द्रकृतम् - आशीः प्रणामविधिवस्तुनिदर्शनम्)

**पद्य-संख्या**

1. Also in GNJ Ms 18252 "अन्त्याक्षरीश्लोकसंग्रहे" With v.1.as शावकं for मण्डलं, मिच्छन् for मिच्छुर्भु, कृताद्दू for कृतैर्दू। Also is SSRB 4.32 with v.1. नुदेद् for नुयाद्।

2. Ms. Writes यस्येदिंचि for यस्योदंचित।

4. Ms. Writes प्रमथनि for प्रमथने। Also is SSRB 4.26. Also is Printed Book संस्कृतभाषाप्रदीपे by सखारामराव शर्मा With v.1. प्रथमने सिद्धाधिपैः सिद्धये for प्रमथनि सिद्धादिभिर्मुक्तये।

6. Ms. writes पुरचरणा for पुरहरचरणा।

7. Ms. writes मौलौऽस्ति for मौलौ तेऽस्ति। also in SSRB 10.58 As "मौलौ किं नु महेश मानिनि जलं कं वक्त्रमम्भोरुहं किं नीलालकवेणिका मधुकरी किं भ्रूलता वीचिका। किं नेत्रे शफरौ किमु स्तनयुगं प्रेङ्खद्रथाङ्गद्वयं, सा शङ्कामिति वञ्चयन्गिरिसुतां गंगाधरः पातु वः।।"

8. Ms. writes तव मृगसूकरं for पशुपतिसूकरं।

9. Ms. writes पातकवास्मरारि for पातकं वः स्मरारिः।

10. Also is SMA 2.104. Also in Sk 163 and SA44. With v.1. in second line as यश्चोद्धृत्तभुजंगहारवलयो गंगां च योऽधारयत् and is forth line as पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः।

11. Also is SA 97.

12. Also is GNJ Ms 43935 with v.l. कृष्णात् for इन्द्रात्; प्राणेशान् for दण्डेशान्; तव भक्तिकार्य for निजगेहकर्म; स्कन्दोऽपि for स्कन्दोऽस्ति, खिन्ना for त्रस्ता, तव for भव। Also is SSRB 19.25 रामात् for इन्द्रात्, याचय for प्रार्थय, प्रेतेशान् for दण्डेशान्, तवास्ति वृषभः; for वृषोस्ति भवतः, त्रिशूलं तव for त्रिशूलादपि, तव चान्नदान for निजगेहकर्म, खिन्नाहं for त्रस्ताहं, हर for भव। Also in Ms

49306 as स्फुटश्लोक v.1. कृष्णात् for इन्द्रात्, प्रतेशात् for दण्डेशात्, तवास्ति वृषभः for वृषोस्ति भवतः, चास्मि तवान्नपान for हं निजगेहकर्म, संरक्षणे for गोरक्षणे, दग्धाहं for त्रस्ताहं; हर for भव।

13. Ms. Writes मश for महेश, मधुकरा, for मधुकरी। Also is SSRB with author's name as अकबरीकालिदास, v.1. शफरौ किमु for शफरीद्वयं, वञ्चयन् for मानयन्।

14. Ms. Writes प्रितमे for प्रियतमे, रामाञ्चः for रोमाञ्चः, भागोपन for भावगोपन। Also is SP 104 and SK 116 With author's name as लक्ष्मीधर v.1. कम्पित for वेपित, भीतेभव for भीतेस्तव, Also is SSRB 19.32 v.1. भव for तव।

15. Ms. Writes तस्यद्दिक् for तत्स्याद्दिक् धराऽशे for धरोऽशे, ब्रह्माण्डस्थिति for ब्रह्माण्डजस्य स्थिति, त्रस्तत्व for त्रस्तस्त्री, भतिभस्या for मतिभयस्या।

16. Ms. Writes पातु for पान्तु।

17. Also in Sangamni Patirka Sam. 2023 With the name of poet as राजशेखर v.1. as विश्वे शटासन्तते for विष्वग्जटासंस्थिते, कल्पान्तारभटी for कल्पारम्भघटी; तत्रः for तद्वः।

18. Also is SSRB 545.108, Ms Writes द्धतिपतिः for ड्वधिपतिः, गुणे for गणे, उद्धीड्तुङ for उड्वीड्रुड and सुदेवा for मुदे वो, भ्रां for भ्रा, वा for वो।

20. Also is GN Ms 28157 सुभाषितपद्धतिः" by श्रीपति। This Verse also occurs is SK 55; SA47 and SP 96. SK Writes the author's name as वररुचि। Also is SSRB 8.38 With v.1. स्थित for च्युता, द्वयं for समं, किरणैः for किरणा। Ms. drops the wo;d 'समं' after वलयं।

22. Also is SSRB 8-41 With v.1. प्रभवति for प्रभृति, Ms Writes मितिश्च for मितिं, Ms Omits the letter श्व in श्वसन्त्यां।

23. Ms. Writes गिजा for गिरिजा।

24. Also is SP 62. and SSRB 6.3

25. Ms. Writes कृतवामाङ्गी for कृतवामाङ्गि, कृतकुण्डली for कुतकुण्डलि। वन्दिवः for वन्दितः।

26. Ms. Writes कंकरो for शंकरो।

27. Ms Writes योगिर्ध्ये for योगिभिर्ध्ये।

28. Also is SK 277 with v.1. व्रजलतां for अभिलषता, पुष्पान्विता for गत्वा वनं। Also is SSRB 40.73 v.1. मृगस्य for मृगेण, राधे for मुग्धे, तन्वीमलं for गत्वा वने। Also is SA 104 and SP 122 with v.1. मृगस्य for मृगेण, राधे for मुग्धे, SA v.1. पिबलतां for अभिलषता, तन्वीमले for गत्वा वनं, SK Reads कृष्णं कथं वानरः for कृष्णादहं वानरात्, Ms Writes वने for वनं and इत्थं for मित्थं।

29. Also is SS 77 with कुटिलो for कुटिले, त्वमसि for किमुत, कपीन्द्रः for ननगौका, गोपकन्या for सत्यभामा, जडः for जितः। In SS the author's name is mentioned as लीलाशुक and the work's title is कृष्णकर्णामृत Also is SSRB 42.102 with v.1. चक्रपाणिः for पद्मनाभः। Also in GNJ Ms 43935 With v.1. किमसि for किमुत, कपीशो for कपीन्द्रः, इत्थं राधा विवादे for इत्येवं सत्यभामा।

30. Ms Writes दृष्टो for दष्टो, विलम्बकृंतो for विलम्बः कुतः।

31. Ms Writes हुवहे for हुतवहे।

32. Ms Writes जलधारावास भूतफणी for जलधारावासभूतः फणी।

33. Also is SSRB 14.87 With v.1. पल्लविता for कन्दलिता।

34. Ms Writes बाहुगोपि for बाहुगोप। Also is SSRB 41.88 With v.1. रसा for वशा, कन्दर्पेण तदर्पिताधरतटी for स्निग्धः कामवशार्पितोधरतटे, वाहुर्गोप for बाहुगोपि, भवतां for भवतः। Ms. Writes रधिरानदा for रधिकानन्दा, श्रेयां for श्रेयांसि, गोकुलावन for गोकुलायन, मुद्रांकिता for मुद्रांकितां।

35. Ms Writes स्थलीनिपथ्यो for नेपथ्यो, कंसध्वंसन for स ध्वन्सन।

36. Also is SSRB 41.93 v.1. पत्रे बिभ्यति for यत्र स्विद्यति, क्षणमपि for प्रपतति, क्षिप्रं for प्रीत्या, तदालोकनाद्व्यामोहेन for हरौ......मभूत्, जितं जितं जितमभूद् व्यालोल for जितं....मुग्ध।

37. Ms Writes वपुरां for वपुधरो।

38. Also is SSRB 26.93 v.1. संवलनया for संचलतया, धारि for चारि।

39. Ms Writes पिबतु रे for पिब हरे। Also is SA 38 with author's name as जीवक। v.1. क्रीडितुं for खेलितुं, पराः for परं, गिरः for वचः, स्पृशन् प्रमुदितः for करेण विमृशन्। Aslo is SS4. 75 v.1. वशाः for परं; स for स्व।

41. Ms Writes गतामिमुखी for गतामभिमुखी। Also is catal. of BORS Patna, vol. IR.No. 195 With Work's title दानवाक्यावली by सूर्यकर With v.1.

रुदन् for तत:; हे मातर्निजगोंप for मात: पश्य जुगोप; मे for मत्, व्यस्त for व्याज, धूर्त्तक्रिय: for धूर्तो हरि:।

42. Also is SA 40 With v.1. नाम्ब for नाद्य; अथ for तु, माता for दृष्ट्वा, दृष्ट्वा for माता; वशं for पदं। Aslo in SS 4.67, v.1. विदारिते शिशुमुखे for विकासिते तु वदने दृष्ट्वा। Also is SK 251 v.1. विदारिते शिशुमुखे for विकसिते तु वदने, मनसा for मधुना। Also is SP 4016 v.1. अम्ब for अद्य, मसकृत् for मधुना, विदारिते च वदने दृष्ट्वा समग्रं for विकासिते तु वदने दृष्ट्वा समस्तं। Also is SSRB 40.81 With v.1. किमेष आह for क एवमाह, च for तु, श्रीपति: for केशव:, नाम्ब for नाद्य। Also is GNJ Ms 43935 With v.1. नांबु for नाद्य, च for तु, दामोदर: for व: केशव:।

43. Ms Omits धनु after क्व।

44. Ms Writes सरसं for सरभसं, सुगण: for सुरगण:।

45. Also in SA 101. v.1. कच्छं for तीरे; भङ्गैर्विनिवाररितोऽपि बहुशो for संज्ञाविनिवारतोप्य सदृशं, गोपीभि: for गोपी; करपद्म for पाणिसरोज, पायात्स व: केशव: for दामोदर: पातु व:। Also is GNJ Ms 20317 श्रीरामकल्यद्रुम: v.1. गोपीपति for दामोदर:। Also in GNJ Ms 43935 with v.a. कच्छं for तीरे, कृष्ण for वत्स, पिसभृशं for प्यसदृशं, स्मेरो हरि; for दामोदार:।

46. Also in SS 4.50 With v.1. भृद्य for कृष्य। Also is SSRB 40.74 v.1. भृद्य for कृष्य।

47. MS. Writes विघ्नरुषा for विप्लवरुषा, वर्षोकै: for वर्षोत्करै:, आत्म for धात्म।

48. Also is Sangamani Patrika. MS Writes विविक्तु for विवेक्तु।

49. Also is SSRB 41.85 Ms. Writes परिनिर्भर for परिरभ्यनिर्भर, मनोहरि: for मनोहरीहरि:।

50. Also is Ms GNJ 2791 गव्यहरणे v.1. बिम्बोद्गमं for बिम्बोदयं, अत्र for हि।

51. Ms. Writes नर्त्तन् मुग्ध for नृत्यन् मुग्ध।

52. Also is SSRB 38.49 v.1. रञ्चित: for रर्चित:, Ms Writes लसरै for लसरुचिरै।

53. Ms. Writes छायाशौर: for छायाशौरे:।

54. Ms Writes रितं for दुरितं।

56. Ms Writes मिन्द्रो: for मिन्दो:, सराजै for सरोजै। Also is SSRB 37.43 v.1., पादारविन्दं for पादारविन्दे, मायां योजयत्याननेन्दौ for मैत्री माननं योजयन्त्यो Also is SP 121 v.1. मित for मिति, मायी for मैत्रीं, व: for न:।

57. Also is GNJ Ms 2791 गव्यहरणे v.1. मां बालकृष्ण: for गोपालबाल:।

59. Ms. Writes निलावयवं for निखिलावयवं।

61. Also is SSRB 24.18 v.1. प्रकामान् for प्रियं व:।

62. Ms Writes रिक्तपात्रो for रिक्तपात्रे।

63. Also is SSRB 36.20 v.1. कौतुकी for लोलुप:, गोपबाल: श्रियमातनोतु व: for कोऽपि गोपालशिशुर्मुदेस्तु न:। Also is "संस्कृतभाषाप्रदापे by सखारामरावजी शर्मा and also in "वृहत्स्तोत्ररत्नाकार"। v.1. Same As SSRB

65. Also is GNJ Ms 28157 With v.1. विनां for विनीत, लंकृत for लंकृति, विग्रहो for मूर्त्तिः, रघूणामथवा यदूनां for यदूनामथवा रघूणां। Ms Writes विनी for विनीत।

66. Ms Writes पात्स for पायात्स।

67. Ms Writes डुडुगो for डुडुडुगो, स्वसुकी for स्वश्चसुकी।

68. Also is GNJ Ms 12705 "चतुरङ्गविनोद:"।

69. Also is SSRB 30.8 Ms Writes निस्पदो for निस्पंदो।

70. Ms. Writes जठरकठा for जरठकमठा, या for य:, लक्ष्मी for लक्ष्मीम्, या for चय:।

71. Ms Writes तनुरक्षा for तनुसुरक्षा।

72. Ms Writes वदीयं for वदियं, दतो for दन्तो, कोला for कोल, कयतां for कुरुतां।

73. Also is SSRB 31.11 Ms Writes काला for कोला, माल्यनि for माल्यति।

74. Also is SMA 2.72 v.1. लीलया for क्रीडया, भवतां for भगवान्, क्षणं for चिरं, तन्तुतुलनां for नालकलनां, भुजंगेश्वर: for भुजंगाधिप:। Ms. Writes लाल for लोल Also is SSRB 31.9 v.1. तुलनां for कलनां।

75. Ms. Writes दव for द्यु।

77. Ms. Writes आह्लादत्वेष for आदयत्वेष।

78. Also in Ins. from Yewur, 1105 AD, Vide E.I. XII, PP. 229-30 v.1. लङ्गुल for लाङ्गल, क्षेत्र: for क्षेत्रा।

79. Also is SS 4.40, v.1. किमु तिलकमिदं for तिलकमुततथा; श्रवसि हृदि करे for श्रुतिहृदयकरे। Also is SK 216 v.1. तिलकमथ for तिलकमुत; ध्वंसि for द्वेषि श्रवसि हृदि करे for श्रुतिहृदयकरे। Also in SMA 2.85 v.1. श्रवसि हृदिकरे for श्रुतिहृदय करे। SK and SMA Writes the Poet's name as हनूमत:।

80. Ms Writes जिनकर for दिनकर।

81. Ms Writes चरितुं for चयितुं।

82. Also is SSRB 34.5, v.1. कल्पतरु: for कल्पतरून्, गृहे for गृहेषु, सुरगवी for सुरभी:, विप्रवदने for वक्त्रकुहरे, एवं for य: किं, अवनिदेवपालनपरो for अखिलराजकक्षयकरो।

83. Also is GNJ Ms 20317 v.1.तीव्र for तीक्ष्ण।

84. Also is SSRB 35.13 v.1. पुनातु for तनोतु।

86. Ms Writes याग for योग, सखे for संख्ये।

87. Ms Writes नि:पत्याशु for निर्यात्वाशु, तदन्तर्सुधा for तदन्त: सुधा, चलितुं for चलितं।

88. Ms Writes हन्सयन्ती for हंसयन्ती।

89. Ms Writes पजरं for पञ्जरं, भजे for भेजे, मिषण for मिषेण, तस्थो for तस्थौ, ओंकार: for ओकार:।

# श्लोकानुक्रमणिका
## ( आशी:प्रणामविधिवस्तुनिदर्शनम् )

**महिषशतकम्, प्रणेता-श्रीवाञ्छानाथः, सम्पादको हिन्द्याङ्ग्लानुवादकश्च प्रो. राधावल्लभत्रिपाठी।**

संस्कृतसाहित्ये श्रीवाञ्छानाथप्रणीतं महिषशतकं विडम्बनकाव्यत्वेन अन्यापदेशकाव्यत्वेन वा प्रसिद्धमस्ति। अष्टादशशतके प्रणीतमिदं काव्यं कवेर्वाञ्छानाथस्य जीवनवृत्तमपि पुरस्करोति। वाञ्छानाथः तञ्जौरराजसभापण्डित आसीत् किन्तु केषाञ्चिद् अधिकारिणां व्यवहारेण रुष्टः सन् स राजसभापण्डितपदं परित्यज्य कृषिकार्यं प्रारभत। तत्कृते क्रीतं महिषमुपजीव्यैव कविः शतकस्याऽस्य रचनायां प्रवृत्तोऽभवत्। वस्तुतः कृषिकर्मणि स सुखं नानुभवति तथापि वृत्त्यर्थं तत्र प्रवृत्तो भवति-

**दुर्भिक्षं कृषितो नहीति जगति ख्यातं किल ब्रह्मणा-**
**मापद्धर्मतया मनौ च कृषिगौरक्षादिकं सम्मतम्।**
**भूपेष्वर्थपरेषु हन्त समये क्षुण्णे च दुर्भिक्षतो**
**वृत्त्यर्थं कृषिमाश्रयेम भुवि नः किं वा ततो हीयते।।**

महिषं विषयीकृत्य वाञ्छानाथेनाऽत्र स्वद्रोहिणां राज्याधिकारिणां निन्दा व्याधायि। स्वीयां मनोव्यथां प्रकटयन् स वक्ति-

**कञ्चित् पश्वधमं लुलाय विगुणं कर्तुं प्रबन्धाञ्शतं**
**त्वामालम्ब्य समुत्सहे न खलु तद् वर्ण्यस्य माहात्म्यतः।**
**मद्रोहप्रवणाधिकारिहतकक्रोधेन तन्निन्दन-**
**व्याजात् तत्प्रभुतत्प्रभुष्वपि च वाग्दण्डो मया पात्यते।।**

महिषदशावर्णनेनेह तात्कालिकीं सामाजिकीं दशामप्याविष्करोति कविः। यथा-

**राजा मुग्धमतिस्ततोऽपि सचिवास्तान् वञ्चयन्तः खला**
**देशद्रोहपराः सदैव वृषलाः सर्वापहारोद्यताः।**
**आशां मा कुरु चोलदेशकृषये त्वं सैरिभातः परं**
**शिष्टं मे त्वलमल्पकं तदपि न भ्रातस्तवास्त्यन्ततः।।**

काव्यविषयीकृतोऽयं महिषः बहुधा स्तुतोऽभवत् कविना। अयं क्वचित् स्वामिरूपेण, क्वचित् भ्रातृरूपेण क्वचिद् बालकरूपेण क्वचिच्च राजरूपेण संस्तुतोऽस्ति। कवेर्व्यङ्ग्यदिग्धा वाणी नूनमुत्पादयतीह किमप्यपूर्वत्वम्। श्लेषप्रयोगे कवेर्निपुणताऽपि

नाऽल्पीयसी। यथा त्वमेव नः राजा इति वदन् कविरत्र राजगतदोषान् अतीव नैपुण्येन महिषमाश्रित्य वर्णयति-

**सानन्दं महिषीशतं रमयसे मूर्धाभिषिक्तोऽन्वहं**
**त्वं बालव्यजनावधूतिमसकृत् प्राप्नोषि शृङ्गान्वितः।**
**किं च स्वां प्रकृतिं न मुञ्चसि तृणप्रायं जगत् पश्यसि**
**स्वस्ति श्रीमहिषेन्द्र तेऽस्तु नियतं राजा त्वमेवासि नः।।**

साम्प्रतिकसंस्कृतसाहित्ये महिषशतकमिदं विशिष्टं स्थानं भजते। इदं संस्कृतकविताया नवाविष्कारसम्भावना अपि पुरस्करोति। तस्यैतादृशस्य काव्यस्य हिन्दाङ्ग्लयोः भाषयोरनुवादं कृत्वा विद्वद्वरेण्यः श्रीमान् राधावल्लभत्रिपाठी महान्तमुपकारं समपादयत् सहृदयानाम्। भूमिकायां विवृतं काव्यस्यास्य स्वरूपमैतिह्यं चापि महत उपकाराय कल्प्येतेऽनुसन्धित्सूनाम्। ग्रन्थान्ते परिशिष्टेषु पाठभेदादिप्रदर्शनमपि ग्रन्थपरिशीलनाय अलं भवेदिति। ग्रन्थे संस्कृतटीकाया अभावः पण्डितानां मनसि खेदमुत्पादयेदिति आगमिनि संस्करणे तस्याः संयोजनं भविष्यत्येवेति नो विश्वासः।

**—रमाकान्तपाण्डेयः**

